कलिकायाम्—ततः प्रक्षालयेत्पादौ भार्यास्राविितवारिणा ।
श्राद्धकाले यदा पत्नी वामे नीरप्रदा भवेत् ॥
आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते ।
नाधः प्रक्षालयेत्पादौ कर्ता पित्रादिकर्मसु ॥

सिन्धौ लौगाक्षिः—मण्डलादुत्तरे देशे दद्यादाचमनीयकम् ।

तथा—विधाय क्षालनं तेषां द्विराचमनमिष्यते ।

स्वयमपि द्विराचामेदिति हेमाद्रौ ।

नारदः—यत्राऽऽचमनवारीणि पादप्रक्षालनोदकैः ।
संगच्छन्ति बुधाः श्राद्धमासुरं तत्प्रचक्षते ॥

चन्द्रिकायाम्—आसनेषु सदर्भेषु विविक्तेषूपवेशयेत् ।

विविक्तेषु परस्परमसंलग्नेषु । कारिकायामपि—
द्वौ दैवे प्राङ्मुखौ पित्र्ये त्रीन्विप्रानुदगाननान् ।
ध्यायन्ममैते पितर इति तानुपवेशयेत् ॥

व्यासः—सव्येनैवाऽऽसनं धृत्वा दक्षिणे दक्षिणं करम् ।
व्याहृतीभिः समस्ताभिरासनेषूपवेशयेत् ॥

समाध्वमिति चैवोक्त्वेति ।

प्रतिविप्रं श्वेतसूत्रवर्तियुक्तमविच्छिन्नं तैलदीपं स्थापयेदिति कारिकाभाष्ये। प्रयोगपारिजाते स्मृत्यन्तरम्—
तत्राऽऽसनानि देयानि तिलाश्चैव कुशैः सह ।
पृथक्पृथगासनेषु तिलतैलेन दीपिका ॥ इति ।

तत्रैव—अप्रसूताः स्मृता दर्भाः प्रसूतास्तु कुशाः स्मृताः ॥ इति ।

माधवीये यमः—भिक्षुको ब्रह्मचारी वा भोजनार्थमुपस्थितः ।
उपविष्टेष्वनुप्राप्तः कामं तमपि भोजयेत् ॥

भिक्षुकानाह चन्द्रिकायामत्रिः—
ब्रह्मचारी यतिश्चैव विद्यार्थी गुरुपोषकः ।
अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकाः स्मृताः ॥ इति ।

कूर्मपुराणे—अतिथिर्यस्य नाश्नाति न तच्छ्राद्धं प्रचक्षते ।

अतिथिलक्षणं विष्णुपुराणे—
अज्ञातकुलनामानमन्यतः समुपागतम् ।
पूजयेदतिथिं सम्यङ्नैकग्रामनिवासिनम् ॥ इति ।

नीवीबन्धप्रकारमाहाऽऽश्वलायनः–

'नीवीवासो दशान्तेन स्वरक्षार्थं प्रबन्धयेत् ।

कात्यायनोऽपि–नीवी कार्या दशागुप्ति वामकुक्षौ कुशैः सह ॥ इति ।

वृद्धयाज्ञवल्क्यः–दक्षिणे कटिदेशे तु तिलैः सह कुशत्रयम् ।

स्मृत्यर्थसारे तु–पितॄणां दक्षिणे पार्श्वे विपरीता तु दैविके ।

दैविके वृद्धिश्राद्ध इति कमलाकरः । ततः मक्रान्तं श्राद्धं करिष्य इति संकल्पः । ततोऽपहता इतिमन्त्रेण प्रसव्यं सर्वतस्तिलानवकीर्योदीरतामित्यृचं जपेदिति परिशिष्टे । तिला रक्षन्त्वसुरानितिमन्त्रेण द्वारदेशे कुशतिलान्प्रक्षिपेदिति स्कान्दे । पराशरः–

तद्विष्णोरितिमन्त्रेण गायत्र्या च प्रयत्नतः ।

प्रोक्षयेदन्नजातं तु शूद्रदृष्ट्याविशुद्धये ॥

हेमाद्रौ ब्रह्माण्डे–श्राद्धभूमौ गयां ध्यात्वा ध्यात्वा देवं गदाधरम् ।

स्वात्मानं च पितॄन्ध्यात्वा ततः श्राद्धं प्रवर्तयेत् ॥

देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।

नमः स्वाहायै स्वधायै नित्यमेव नमो नमो नित्यमेव नमो नमः ।

आदिमध्यावसाने तु त्रिरावृत्त्या जपेद्बुधः ।

पितरः क्षिप्रमायान्ति राक्षसाः प्रद्रवन्ति च ॥ इति ।

अथ देवार्चनम् । तत्र प्रत्युपचारमाद्यन्तयोरपो दद्यादिति पित्रर्चाप्रकरणे नारायणवृत्तौ । प्रचेताः–

आसनेष्वासनं दद्याद्दैवे दद्यात्तु दक्षिणे ।

नागरखण्डे–ऋजुभिः साक्षतैर्दर्भैः सोदकैर्दक्षिणादिशि ।

देवानामासनं दद्याद्वामभागे तु पैतृके ॥

युग्मान्दर्भानिति चन्द्रिकायाम् । चतुर्भिर्वेति ग्रन्थान्तरे । आश्वलायनैर्दैविकयिमद्विस्तेऽपि पुरूरवार्द्रव०नामिदमासनमिरपेक्स्मै दत्त्वा पुनरेवमेव द्वितीयाय देयम् । सर्वत्रैवं प्रयोगः । निर्णयसिन्धौ–

आसने स्यासनं ब्रूयादर्घ्ये स्वर्घ्यं द्विजोत्तमः ।

सुगन्ध च सुपुष्पाणि सुमाल्यानि सुधूपकः ॥

सुज्योतिश्चैव दीपे तु स्वाच्छादनमिति क्रमः ।

---

१ ग °स्नन्तरे° । २ ग °क्रान्तश्रा° । ३ ग °न्दे । परा° । ४ ग जनार्दनम् । ५ ग नम । ६ ग °वार्चा । स° ।

चन्द्रिकायां तु–सुगन्धोऽस्तु सुदीपोऽस्तु चेत्यादि समुदाहरेदिति। आसनप्रदानानन्तरमत्राऽऽस्यतामिति कर्ता वदेत्। धर्मोऽसीति विप्र इति च तत्रैव। ततस्तृतीयं निमन्त्रणम्। तद्विधिमाह गालवः–

> दैवे क्षणः क्रियतां तु निरङ्गुष्ठं करं ततः। धृत्वेति शेषः।
> ॐ तथेति द्विजा ब्रूयुस्तं प्राप्नोतु भवानिति।
> कर्ता ब्रूयात्ततो विप्रः प्राप्नवानीति वै वदेत्॥ इति।

अथार्घ्यविधिः। तत्र वैश्वदेवस्थाने विप्रस्यैकत्वे द्वित्वे बहुत्वे चैकमेवार्घ्यपात्रमासाद्य स्वाहार्घ्या इति सर्वेभ्यः सकृन्निवेद्य सर्वेषामर्घ्यं विगृह्य सर्वेभ्यो दद्यादिति गृह्यपरिशिष्टे प्रयोगपारिजाते निर्णयसिन्धौ च। श्राद्धचन्द्रिकायां पात्रद्वयमप्युक्तम्। अस्मिन्नर्घ्यपात्रे दर्भद्वयात्मकं पवित्रम्। शौनकजयन्ताभ्यामर्घ्यरहितस्य देवार्चनस्योक्तेराश्वलायनानां दैवे न चाऽर्घ्यदानमिति केचित्। अर्घ्यपूरणोत्तरमावाहनम्। तत्क्रमः स्मृत्यन्तरे–

> देवार्चा दक्षिणाङ्गे स्यात्पादजान्वंसमूर्धनि।
> शिरोंसजानुपादेषु वामाङ्गादिषु पैतृके॥

अर्चा पूजाऽऽवाहनरूपेति चन्द्रिकायाम्। विश्वे देवास आगतेत्यावाहनमन्त्रः। अत्र वैश्वदेविकोत्पत्तिध्यानं केचित्कुर्वन्ति। तद्यथा–

> विश्वायां दक्षकन्यायां जाता धर्मान्महात्मनः।
> विश्वे देवा इति ख्याता देववर्या महाबलाः॥
> शक्रेण सह योद्धारो विजेतारस्तु रक्षसाम्।
> यन्नामस्मरणादेव प्रद्रवन्त्यसुरा भयात्॥
> बाणबाणासनधरा द्विभुजाः श्वेतवाससः।
> केयूरिणः कुण्डलिनः किरीटकटकान्विताः॥
> धैर्यसौन्दर्यसंयुक्ता दिव्यस्रगनुलेपनाः।
> इन्द्रस्यानुचराः सर्वे गोप्तारस्त्रिदिवस्पतेः॥ इति।

ततो विश्वे देवाः शृणुतेमं हवं म इत्यादिप्रयोगः। निर्णयसिन्धौ गभस्तिः–

> अर्घ्यं पिण्डप्रदानं च स्वस्त्यक्षय्ये तथैव च।
> गन्धपुष्पादिकं सर्वं हस्तेनैव तु दापयेत्॥

१ ग. 'विप्रैक°'। २ ग. ॰णात्।

कारिकाभाष्ये पात्रेण तु न दापयेदिति चतुर्थचरणे पाठः । व्यासः–

अपवित्रकरो गन्धैर्गन्धद्वारेति पूजयेत् ।

विप्राणां गन्धेन वर्तुलं पुण्ड्रमर्धचन्द्राकारं च न कार्यम् । तिर्यग्लेपो मन्त्रत्येवेतिं निर्णयसिन्धौ । कलिकायां स्मृतिः–

गन्धद्वारेति वै गन्धमायनेते च पुष्पकम् ।
धूरसीत्यमुना धूपमुद्दीप्यस्वेति दीपकम् ॥
युवं वस्त्राणि मन्त्रेण वस्त्रं दद्यात्मयत्नतः ॥ इति ।

पाददेशे धूपनिवेदनं मुखदेशे दीपनिवेदनमिति प्रयोगपारिजाते । गैन्धदानादौ च पदार्थानुसमयः काण्डानुसमयो वा । केचिद्दैवे पित्र्ये च पदार्थानुसमयेनार्चनमित्याहुस्तच्छाखान्तरविषयम् । बह्वृचानां तु सूत्रे देवानुक्तेः काण्डानुसमय एवेति कमलाकरः । पराशरः–

वाचयेत्परिपूर्णत्वं वासो दद्याद्विधानतः ।
नारदीये–देवैश्च समनुज्ञातो यजेत्पितृगणं तथा ॥

अथ पित्रर्चा—तत्राऽऽसने दर्भाः पञ्च सप्त वेति कारिकाभाष्ये । अर्घ्यपात्राणि तु पितृसंख्ययैव न तु विप्रसंख्यया । सर्वेषां स्थान एकब्राह्मणपक्षेऽपि प्रतिदैवतमेकैकमर्घ्यपात्रमासाद्य स्वधार्घ्या इति सकृन्मन्त्रेण युगपत्सर्वाणि तस्मै निवेद्य पुनः पुनरम्या अपो दत्त्वा तस्मा एव पितरिदं तेऽर्घ्यमित्यादिमन्त्रैः सर्वाण्यर्घ्याणि दद्यात् । एकैकस्य स्थान एकैकब्राह्मणपक्ष एकैकस्मा एकैकं निवेद्यैकैकस्मा एकैकमर्घ्यं दद्यात् । पितुः स्थानेऽनेकब्राह्मणपक्षे तदेवार्घ्यपात्रं सकृन्मन्त्रेण सर्वेभ्यो निवेद्य पितरिदं तेऽर्घ्यमिति मन्त्रावृत्त्या सर्वेभ्यो विगृह्य देयात् । एवं पैतामहादावपि । हेमाद्रौ—

तिस्रस्तिस्रः शलाकास्तु पितृपात्रेषु पार्वणे ।
एकोद्दिष्टे शलाकैकां निधायोदकमाहरेत् ॥ इति ।

या दिव्या इत्यनुमन्त्रणं प्रतिविप्रं सकृदेव । प्रयोगपारिजात आचार्यः–

पितुः पैतामहं चार्घ्यं शिष्टं पैतामहे ततः ।
संस्राव्य तच्च पित्र्ये तु सकूर्चं स्रावयेदथ ॥ इति ।

---

१ ग. °ब्द्रमुर्धपुण्ड्रम° । २ ग °ति सिन्धौ । यान्नि° । ३ क ग °न्धादीना च । ख. ग. °न्धादीनां च प्रतिविप्र प° । ४ ग °कम्° । ५ क ख जुहुयात् । ६ ग °हेन्ततः ।

अर्घ्यदानान्ते पितृभ्यः स्थानमसीति प्रथममर्घ्यपात्रं शुचौ देशे स्थापयेत्। सर्वविप्रोत्तरतो वा न्यसेत्। पित्र्यविप्रवामभागे वा। कर्तुर्वामतो वेति सिन्धौ। पिण्डनिपरणस्थल इति कारिकाभाष्ये।

अत्रिः—गन्धादिभिस्तदभ्यर्च्य तृतीयेन पिधापयेत्॥ इति।

तत्पात्रं न्यग्बिलं वा कुर्यात्। न्युब्जीकरणं त्वेकोद्दिष्टविषयमिति केचित्। न्युब्जीकृतेऽप्यर्चनं तुल्यमिति कमलाकरः। दर्शश्राद्धादौ मातामहादिसंस्रवानपि पितृपात्र एव गृहीत्वा प्रयाजवत्तन्त्रेण न्युब्जी कुर्यादिति स एव। आद्यपात्रद्वयं न्युब्जी कुर्यादिति चन्द्रिकायाम्। आच्छादनानन्तरं सति संभवे नानालंकारादि दद्यादिति पुराणादावुक्तं तदन्यशाखीयपरम्। बह्वृचैस्तु श्राद्धान्ते प्राक्स्वधावाचनाद्देयम्। वृत्तिकारेण तथैव सिद्धान्तितत्वात्। आसनप्रभृतिसाङ्गपूजाविधिस्तु सूत्रे परिशिष्टे च सम्यगुक्तत्वादत्र संक्षेपेण निरूपितः। विस्तरेण तु प्रयोगे वक्ष्यते। अर्चनानन्तरं कृत्यमुक्तं चन्द्रिकायाम्—

निर्वर्त्य ब्राह्मणादेशात्क्रियामेवं यथाविधि।
पुनर्भूमिं च संशोध्य पद्मैरन्तरमाचरेत्॥
भाजनानि ततो दद्याद्धस्तशौचं पुनः क्रमात्। इति।

भूशोधनमर्चनप्रसङ्गात्पतितगन्धपुष्पदर्भापनयनम्। अन्तरं विच्छित्तिः। आदेशात्पात्राणि दद्यादित्यन्वयः। तेन तत्रापि प्रश्नानुज्ञे ज्ञेये इति कमलाकरः। भोजनपात्राधस्थमण्डलनिर्माणप्रकारश्चन्द्रिकायाम्—

नैर्ऋतीं दिशमारभ्य ईशान्यन्तं समापयेत्।
तामेव दिशमारभ्य दैविकस्य तदन्तिकम्॥
ईशानीं दिशमारभ्य नैर्ऋत्यामप्रदक्षिणम्।
तामेव दिशमारभ्य पैतृकस्य तदन्तिकम्॥ इति।

मण्डलकरणसाधनानि ब्राह्मे—

मण्डलानि च कार्याणि नैवारैश्चूर्णकैः शुभैः।
गौरमृत्तिकया वाऽपि भस्मना गोमयेन वा॥

सिन्धौ—भस्मना वारिणा वाऽपि कारयेन्मण्डलं ततः। इति।

मण्डलेषु दैवे सयवान्पित्र्ये सतिलान्दर्भान्दद्यादिति परिशिष्टे। दैवे चतुरस्रं पित्र्ये वृत्तमिति तत्रैव। भोजनपात्राणि मण्डलेषु भूमावेव निदध्यान्नोपरीति कमलाकरः। श्राद्धदीपिकायां मात्स्ये—

---

१ ख 'तेऽभ्यर्च'। २ ग ग ३ अर्थ पा°। ४ ग 'दनप्रदाना°। ५ ग 'रे। भोज°।

अकृत्वा भस्ममर्यादां यः कुर्यात्पाणिशोधनम् ।
आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते ॥ इति ।

भस्ममर्यादाकरणे पिशङ्गभृष्टिं०रक्षा णो अग्न इति मन्त्रद्वयं केचित्पठन्तीति कमलाकरः । ब्रह्माण्डे–

प्रक्षाल्य हस्तपाद्यादि पश्चादद्भिर्विधानवत् ।
प्रक्षालनजलं दर्भैस्तिलैर्मिश्रं क्षिपेच्छुचौ ॥

पाद्यमण्डलोपरीति हेमाद्रिः । संग्रहे–

विसर्गश्चुलकश्चैव अक्षय्यं पङ्क्तिवारणम् ।
करशुद्धिर(रा)पोशा(श)नं पितृपूर्वाणि कारयेत् ॥ इति ।

अग्नौकरणानन्तरं वा मण्डलकरणादि । परिशिष्टे तथैवोक्तत्वात् ।

अथाग्नौकरणम् । तच्चानुपनीतब्रह्मचारिस्नातकविधयानग्निकैर्धिप्रपाणावेव कार्यम् । अनाहिताग्नेर्गृह्याग्निमतो दर्शादौ व्यतिषङ्गोऽस्ति तत्रैष गृह्याग्नावग्नौकरणम् । यत्र व्यतिषङ्गो नास्ति तत्र पाणावेव । बह्वृचानामाहिताग्नीनां सर्वाधानिनामर्धाधानिनां च विप्रपाणिष्वेव । गृह्यपरिशिष्टे–

अन्वष्टक्यं च पूर्वेद्युर्मासि मास्यथ पार्वणम् ।
काम्यमाभ्युदयेऽष्टम्यामेकोद्दिष्टमथाष्टमम् ॥
चतुर्ष्वाद्येषु साग्नीनां वह्नौ होमो विधीयते ।
पित्र्यब्राह्मणहस्ते स्यादुत्तरेषु चतुर्ष्वपि ॥

एवमेव वृत्तिकारेण सिद्धान्तितम् । सर्वाधानी दर्शश्राद्धे दक्षिणाग्नौ जुहुयादिति चन्द्रिकायाम् । अर्धाधानी गृह्याग्नाविति माधवादयः । अर्धाधानिनो व्यतिषङ्गपक्षे गृह्य एवेति प्रयोगपारिजाते । वृत्तिकारमते वार्षिकादौ नैव व्यतिषङ्गः । अन्यमते त्वस्ति । अत्र यथाचारमनुष्ठेयमिति कमलाकरः । चन्द्रिकाकारस्तु आश्वलायनानामनुष्ठानं वृत्त्यनुसारेणास्तीत्याह । आश्वलायनानां गृह्याग्निमतामन्वष्टक्यादिश्राद्धचतुष्टयं विना सर्वेषु श्राद्धेषु पाणिहोम एवेति वृत्तिस्वरसः । स च पाणिहोमः पाणिष्विति बहुवचनात्सर्वविप्रपाणिषु इति वृत्तिकृत् । कारिकायां तु–एकैकामाहुतिं केचिद्विगृह्यैव प्रजुह्वति । चन्द्रिकायां जातूकर्ण्यः—

अग्न्यभावे तु विप्रस्य पाणौ दद्यात्तु दक्षिणे ।
अग्न्यभावः स्मृतस्तावद्यावद्भार्यां न विन्दति ॥ इति ।

विधुरस्य विशेषो मदनरत्ने यमेनोक्तः—

अपत्नीको यदा विप्रः श्राद्धं कुर्वीत पार्वणम्।
पित्र्यविप्रैरनुज्ञातो विश्वदेवेषु हूयते॥

अत्रोपवीती स्वाहाकारेणाग्निपूर्वकं दैविकधर्मेण जुहुयादिति हेमाद्रिः। वायवीये—

विधुरो दैविके कुर्याच्छेषं पित्र्ये निवेदयेत्॥ इति।

वैश्वदेवविप्रबहुत्वेऽपि प्रथमविप्रपाणावेव होम इति कमलाकरः। यद्वा सर्वत्र दैवपित्र्यविप्रकरयोर्विकल्प इति हेमाद्र्यादयः। उपवीतित्वे दैवे होमः प्राचीनावीतित्वे पित्र्य इति कमलाकरः। पाणिहोमेऽप्यग्नौकरणविधिं केचित्कुर्वन्ति। तदुक्तं हेमाद्रौ यमेन—

अग्नौकरणवत्तन्त्रं होमो विप्रकरे भवेत्।
पर्युक्ष्य दर्भानास्तीर्य यतो ह्यग्निसमो द्विजः॥

अपरार्के शौनकः—भवत्स्वेवाग्नौकरणं करिष्य इति वै वदेत्।

क्रियतामिति प्रतिवचनम्। मेक्षणेन करेण वा होम इति कमलाकरः। पाणिहोमे मेक्षणप्रहरणं नेति वृत्तिकृत्। अपूर्वत्वान्नायं विधिरिति केचित्। तदुक्तं स्मृतिरत्नावल्याम्—

नानुज्ञा पाणिहोमे स्यान्न स्तः पर्यूहणोक्षणे।
नाग्ने तमद्यादिति च न स्यातामिध्ममेक्षणे॥ इति।

अत्र केचिदिदं सोमाय पितृमत इदमग्नये कव्यवाहनायेति समन्त्रकविभागकरणं कुर्वन्ति। तत्रोच्यते—यत्र नानादैवते स्थालीपाकतन्त्रे समन्त्रकनिर्वापस्तन्त्रेण श्रपणं तत्रैव समन्त्रकविभागकरणं पिण्डपितृयज्ञे तदभावान्निबन्धकारैरनुक्तत्वाच्च तदुपेक्ष्यम्। तूष्णींविभागकरणं भवत्येवेति। हुतावशिष्टप्रतिपत्तिमाह यमः—

पितृपाणिहुताच्छेषं पितृपात्रेषु निक्षिपेत्।
अग्नौकरणशेषं तु न दद्याद्वैश्वदेविके॥

एतदग्निहोमेऽपि सममिति कमलाकरः। वृद्धवसिष्ठः—

पित्र्यविप्रकरे हुत्वा शेषं पात्रेषु निक्षिपेत्।
पिण्डेभ्यः शेषयेत्किंचिन्न दद्याद्वैश्वदेविके॥ इति।

कमलाकरस्त्वाह—पाणौ हुतं पात्रे निधाय विप्रानाचमय्य(चाम्य) हुतशेषं पात्रेषु दद्यात् । अनैमित्तिकं चेदमाचमनं न हुतभक्षणनिमित्तम् । तेनाग्नौकरणाभावेऽप्याचमनं भवतीति सिद्धम् । विप्राः पाणौ हुतमन्नं भोजनार्थदत्तान्नेन सह भोजनकाले भुञ्जीयुः । न तु भोजनात्पूर्वमिति । बौधायनमते हवनानन्तरमेव भक्षणं तत्तच्छाखीयानामेव ।

अथ परिवेषणम् । तच्च देवपूर्वमामासु पक्कमिति पात्राण्याज्येनोपस्तीर्य पवित्रपाणिः स्वयमेव कुर्याद्भार्या वा । पात्राणि दर्भैः परिस्तीर्येति रघुनाथीयपद्धतौ । अन्नादि सर्वं दर्व्या पात्रेण च परिवेषयेन्न तु हस्तेन । अपक्कं तैलपक्कं च हस्तेनैव देयम् । भोजने तिला न देयाः । घृतादिपात्राणि भूमौ स्थापयेन्न भोजनपात्रे । परिवेषणक्रम उक्तः संग्रहे—

ओदनं पायसं भक्ष्यं व्यञ्जनादि घृतं तथा ।
सूपमन्ते प्रदातव्यमित्येवं परिवेषयेत् ॥ इति ।

लवणं साक्षाद्धस्तेनं च न परिवेषणीयम् । घृतं भोजनपात्राद्बहिः परिवेषणीयम् । देवपूर्वकपरिवेषणानियमस्तु प्रथम एव परिवेषणे न द्वितीयादिषु । घृतं पितृपूर्वकमेव परिवेषणीयमिति केचित् । परिवेषणकाले यथा शब्दो न भवेत्तथा परिवेषणीयम् । गौडनिबन्धे—

मध्वभावे गुडो देयः क्षीरस्य च तथा दधि ।
न लभ्यते घृतं तत्र कुर्याद्घृतवतीजपम् ॥ इति ।

पङ्क्त्यां विषमदानं नैव कार्यम् । एवमन्नानि परिविष्यान्ननिवेदनं कार्यम् । तत्प्रयोगे वक्ष्यते । तत्रान्नेऽङ्गुष्ठनिवेशन इदं विष्णुरिति मन्त्र उक्तः परिशिष्टे । ऋग्विधाने तु—

इदं विष्णुरितीमाभिः पञ्चभिः श्राद्धकर्मणि ।
अङ्गुष्ठमन्नेऽवगाह्य तेन रक्षो न बाध्य(ध)ते ॥ इति ।

ये चेह पितर इत्युपस्थानानन्तरं

पिता पितामहश्चैव तथैव प्रपितामहः ।
तृप्तिं प्रयान्तु वै भक्त्या यदिदं श्राद्धमाहृतम् ॥
मातामहस्तृप्तिमुपैतु तस्य तथा पिता तस्य पिता ततोऽन्यः ।
विश्वे च देवाः परमां प्रयान्तु तृप्तिं प्रणश्यन्तु च यातुधानाः ॥

---

१ ग. °णौ दत्तम्° । २ घ. °न न प° । ३ ग. यत्र । ४ ख °वगाह्य ।

इति मन्त्रद्वयं केचित्पठन्ति । ततोऽच्छिद्रं वाचयेदिति कमलाकरः । पारस्करः—

संकल्पः पितृदेवेभ्यः सावित्रीमधुमज्जपः ।
श्राद्धं निवेद्याऽऽपोशा(श)नं जुपश्रेषोऽथ भोजनम् ॥

संकल्पोऽन्ननिवेदनम् । निवेद्येति ब्रह्मार्पणं कृत्वेत्यर्थः । बृहन्नारदीये—दत्तं हविश्च तत्कर्म विष्णवे वै समर्पयेदिति । एतद्ब्रह्मार्पणं सव्येनैव कार्यमिति कमलाकरः । अत्र ब्रह्मार्पणं० हरिर्दाता० चतुर्भिश्च० इति श्लोकत्रयं पठेदिति सिन्धौ । अथ विप्रनियमाः । माधवीये—

पवित्रपाणयः सर्वे ते च मौनव्रतान्विताः ।
उच्छिष्टोच्छिष्टसंस्पर्शं वर्जयन्तः परस्परम् ॥

मनुः—यावदूष्मा भवत्यन्ने यावदश्नन्ति वाग्यताः ।
तावदश्नन्ति पितरो यावन्नोक्ता हविर्गुणाः ॥

याज्ञवल्क्योऽपि—भुञ्जीरंस्तेऽपि वाग्यता इति । अत्राऽऽह श्राद्धचन्द्रिकाकारः—वाग्यता वाङ्नियता अधिकं न वदेयुरित्यर्थः । न तु मौनिनः । अपेक्षितं याचितव्यमिति वक्ष्यमाणवचनविरोधादिति । अतोऽन्नादियाचनं विना वाङ्नियमलोपे विष्णुस्मरणं कृत्वा पुनर्वाङ्नियमं कृत्वा भुञ्जीयादिति सिद्धम् । प्रयोगपारिजातकारस्तु अन्नपानाद्यपेक्षायां हस्तसंज्ञया याचितव्यमित्याह । अस्मिन्पक्षे सर्वत्र वाङ्नियमलोपे प्रायश्चित्तम् । अत्रिः—

असंकल्पितमन्नाद्यं पाणिभ्यां यद्युपस्पृशेत् ।
अभोज्यं तद्भवेदन्नं पितॄणां नोपतिष्ठते ॥
अन्नं दत्तं न गृह्णीयाद्यावत्तोयं न संपिबेत् ।
आपोशनं वामभागे सुरापानसमं भवेत् ॥

तथा—पुनरापूर्याऽऽपोशनं सुरापानसमं भवेत् ।
दत्ते वाऽप्यथवाऽदत्ते भूमौ यो निक्षिपेद्बलिम् ॥
तदन्नं निष्फलं याति निराशैः पितृभिर्गतैः ।

शङ्खः—श्राद्धे नियुक्तान्भुञ्जानान्न पृच्छेल्लवणादिषु ।
उच्छिष्टाः पितरो यान्ति पृच्छतो नात्र संशयः ॥

हेमाद्रावत्रिः—हुंकारेणापि यो ब्रूयाद्धस्तेनापि गुणान्वदेत् ।
भूतलाच्चोद्धरेत्पात्रं भुञ्जेद्धस्तेन वा पिबेत् ॥

---

१ क. ख. 'त्वा भु' । २ ग. 'पि वदेद्गुणान् । भू' ।

प्रौढपादो बहिःकक्षो बहिर्जानुकरोऽपि वा ।
अङ्गुष्ठेन विनाऽश्नाति मुखशब्देन वा पुनः ॥
पीतावशिष्टतोयानि पुनरुद्धृत्य वा पिबेत् ।
खादितार्थान्पुनः खादेन्मोदकादि फलानि वा ॥
मुखेन वा धमेदन्नं निष्ठीवेद्भाजनेऽपि वा ।
इत्थमश्नन्द्विजः श्राद्धं हत्वा गच्छत्यधोगतिम् ॥

प्रौढपादः पादोपरि पाददातेति कमलाकरः । आसनारूढपाद इति हरदत्तः । बहिःकक्ष उत्तरवाससो बहिर्भूतकक्षद्वय इति प्रयोगपारिजातकारः । सिन्धौ जाबालिः—

इष्टमुष्णं हविष्यं च दद्यादन्नं शनैः शनैः ।
अपेक्षितं याचितव्यं श्राद्धार्थमुपकल्पितम् ॥
न याचते द्विजो मूढः स भवेत्पितृघातकः ।

हारीतः—ऊर्ध्वपाणिश्च विहसन्सक्रोधो विस्मयान्वितः ।
भग्नपृष्ठस्तु यद्भुङ्क्ते न तत्प्रीणाति वै पितॄन् ॥

प्रचेताः—न स्पृशेद्वामहस्तेन भुञ्जानोऽन्नं कदाचन ।
न पादौ न शिरोव्यस्तिर्न पदा भाजनं स्पृशेत् ॥

उशना—भोजनं तु न निःशेषं कुर्यात्प्राज्ञः कथंचन ।
अन्यत्र दध्नः क्षीराद्वा क्षौद्रात्सक्तुभ्य एव च ॥

अन्यत्र च—सशेषं सर्वमश्नीयान्निःशेषं घृतपायसम् । इति ।
अत एव कारिकायाम्—अन्नं भोजनपर्याप्तं देयं किंचित्ततोऽधिकम् ॥ इति ।

अथाभिश्रवणम् । तद्विधिर्ब्रह्माण्डे—

कुशपाणिः कुशासीन उपवीती जपेत्ततः ।

मनुः—स्वाध्यायं श्रावयेत्पित्र्ये धर्मशास्त्राणि चैव हि । इति ।

तत्राऽऽदौ सव्याहृतिकां गायत्रीं सकृत्त्रिर्वा जपित्वा राक्षोघ्नीः पावमानीरन्नवतीश्च श्रावयेत् । राक्षोघ्नसूक्तानि कृणुष्व पाजः०इन्द्रासोमा तपतम्०रक्षोहणं वाजिन०इत्यादीनि । पावमानीः स्वादिष्ठयेत्याद्याः । अन्नवतीः पितुं नु स्तोषमित्याद्याः । अन्यानि च यथाशक्ति पौरुषाप्रतिरथेन्द्रसोमपितृसूक्तानि श्रावयेत् । अप्रतिरथमाशुः शिशान इति । पितृसूक्तमुदीरतामिति । शेषाणि प्रसिद्धानि । तथा ऋग्यजुःसामोक्तानि पुण्यानि प्रीतिकराणि त्रिसुपर्णं रुद्रं ब्राह्मणादीनि श्रावयेत् । पुराणो-

१ ग. 'रोषस्ति' ।

क्तानि ब्रह्मविष्ण्वर्करुद्रस्तोत्राणि वा । एतदभावे गायत्रीजपं कुर्यात् । अभावे सर्वविद्यानां गायत्रीजपमाचरेदिति वचनात् । भोजनसमाप्तिपर्यन्तं श्रावयेत् ।

अथ संक्षेपात्संभावितानि प्रायश्चित्तान्युच्यन्ते । पराशरीये शङ्खः—

श्राद्धपङ्क्तौ तु भुञ्जानो ब्राह्मणो ब्राह्मणं स्पृशेत् ।
तदन्नमत्यजन्भुक्त्वा गायत्र्यष्टशतं जपेत् ॥

तदन्नं पात्रगतम् । स्पर्शोत्तरमन्यदन्नं न गृह्णीयादिति फलितोऽर्थ इति चन्द्रिकाकारः । उत्तरापोशनोत्तरमुच्छिष्टयोर्मिथः स्पर्श उभयोरपि सद्यः स्नानमिति प्रायश्चित्तेन्दुशेखरे । उच्छिष्टान्नस्पर्शे तु—

उच्छिष्टलेपसंस्पर्शे प्रक्षाल्यान्येन वारिणा ।
भोजनान्ते नरः स्नात्वा गायत्रीत्रिशतं जपेत् ॥ इति ।

अत्रापि भोजनं तावतोऽन्नस्यैवेति स एव । भोजनपात्रस्पर्शे व्यासः—

उच्छिष्टोच्छिष्टसंस्पर्शे स्पृष्टपात्रं विहत्य च ।
सर्वान्नं पूर्ववत्क्षिप्त्वा भोजयेत्तु द्विजोत्तमम् ॥ इति ।

अयमेव न्यायः प्रायश्चित्तान्तरप्रसक्तावप्यनुसरणीयः । यथा भोजनसमय उच्छिष्टपात्रममेध्योपहतं चेत्तत्पात्रमुद्धृत्य भूमिं गोमयेनोपलिप्यान्यपात्रं पूर्ववदासाद्य तस्मिन्सर्वान्नं पूर्ववत्क्षिप्त्वा विप्रं भोजयेदिति । मार्जारकाकनकुलाखुगवादिभिरन्नाद्युच्छिष्टे कृतेऽप्येवमेव । मक्षिकाकेशनखकीटपतङ्गपिपीलिकादिभिरल्पोपहतौ तत्संलग्नमन्नाद्युद्धृत्याप उपस्पृश्य शेषान्नानि भस्मना वा मृदा वाऽम्बुना वा संस्पृश्य भोजयेत् । मार्जारादिस्पर्शेऽप्येवम् ।

अथ विप्रवमने प्रायश्चित्तम् । तत्र दक्षाद्युक्तो होमविधिः । विप्रवमनानन्तरं प्रायश्चित्तत्वेनेन्द्राय साम गायतेति द्वादशर्चं[1] सूक्तं जपित्वा लौकिकाग्निं स्थण्डिले प्रतिष्ठाप्य क्रियमाणे विप्रवमननिमित्तहोमे देवतापरिग्रहार्थमन्वाधानं करिष्य इति संकल्प्यास्मिन्नन्वाहितेऽग्नावित्यादि[2] चक्षुषी आज्येनेत्यन्तमुक्त्वाऽत्र प्रधानं प्राणमपानं व्यानमुदानं समानमेताः पञ्च देवता द्वात्रिंशद्वारं चर्वाहुतिभिः शेषेण स्विष्टकृतमित्यादि प्राणाय त्वा जुष्टं निर्वपामि अपानाय त्वा० व्यानाय त्वा० उदानाय त्वा० समानाय त्वा० इत्यादिचरुकल्पेन चरुं श्रपयित्वाऽऽज्यभागान्ते नामगोत्राद्युच्चारपूर्व-

---

१ ख ग घ कु°। २ ग °ष्टकर°। ३ ग °दि अग्नीषोमौ च°।

कमग्नौ पितॄनावाह्य संपूज्य यथालिङ्गं त्यागपूर्वकमवदानधर्मेण चर्वाहुतीर्जुहुयात्। प्राणाय स्वाहा। प्राणायेदं०। अपानाय स्वाहा। अपानायेदं०। व्यानाय स्वाहा। व्यानायेदं०। उदानाय स्वाहा। उदानायेदं०। समानाय स्वाहा। समानायेदं०। इति पञ्चाहुतिभिरेकाऽऽवृत्तिः। पुनः प्राणाय स्वाहेत्यादिपञ्चाहुतिभिर्द्वितीया। एवं द्वात्रिंशत्। पञ्चभिर्मन्त्रैः प्रतिमन्त्रं द्वात्रिंशत्संख्ययेत्यन्ये। एवं षष्ट्यधिकशतमाहुतयो भवन्ति। अपरे तु पञ्चभिर्मन्त्रैर्द्वात्रिंशत्संख्ययाऽऽहुतीर्जुहुयादिति यथाश्रुतमेवार्थं वर्णयन्ति। एतन्मते द्वात्रिंशदेव। तत्र षड्भिरावृत्तिभिस्त्रिंशदाहुतयः। अवशिष्टे द्वे समानाय स्वाहेत्येतस्याऽऽवृत्त्या संपादनीये। एवं हुत्वा स्विष्टकृदादिहोमशेषं समाप्य वमितं विप्रं घृतं प्राशयेत्। इति होमविधिः। वैश्वदेविकविप्रवमने होम एव न श्राद्धावृत्तिः। पित्र्यविप्राणामुपविष्टानां पितृस्थानीयविप्रवमने तद्दिने तदानीमेव होमं कृत्वोपोष्य द्वितीयदिने पुनः श्राद्धं कुर्यात्। पितामहादिस्थानीयानां यस्य कस्यचिद्वमने होमं कृत्वा तद्दिन एव पुनः पाकं विधाय पुनः श्राद्धं कुर्यात्। पितामहादिवमनेऽपि परेऽहनि श्राद्धं कुर्यादिति केचित्। इदं पिण्डदानात्प्राग्वमने पिण्डदानोत्तरं वान्तौ होम एव न श्राद्धावृत्तिः। केचिद्भोजनानन्तरं पिण्डदानात्प्रागपि वमने होम एव न श्राद्धावृत्तिरित्याहुः। भोजनसमये वान्तौ तु पूर्वोक्तमेव।

अत्र किंचिदुच्यते। श्राद्धे पिण्डदानं प्रधानमिति कर्कः। विप्रभोजनमिति मेधातिथिः। भोजनपिण्डदानाग्नौकरणानीति हेमाद्र्यादयः। शाखाभेदेन प्राधान्यमुक्तं धर्मप्रदीपे—

यजुषां पिण्डदानं तु बह्वृचानां द्विजार्चनम्।
श्राद्धशब्दाभिधेयं स्यादुभयं सामवेदिनाम्॥ इति।

अत एव ब्राह्मणभोजनान्ते संपन्नमिति पृष्ट्वेति सूत्रितवानाचार्यः। एतेनाऽऽचार्यस्यापि भोजनं प्रधानमिति पक्षः संमत इत्यवगम्यते। एवं च प्रधानवैकल्ये श्राद्धावृत्तिः। अङ्गवैकल्ये प्रायश्चित्तमात्रं कर्तव्यम्। अतो बह्वृचानां ब्राह्मणभोजनस्य प्राधान्याद्ब्राह्मणभोजनानन्तरं विप्रवमने होम एव न श्राद्धावृत्तिः। भोजनसमये वान्तौ पुनरावृत्तिरिति सिद्धम्। यजुषां सामवेदिनां तु पिण्डदानोत्तरं वान्तौ होम एव न श्राद्धावृत्तिः। पिण्डदानात्प्राग्वान्तौ श्राद्धावृत्तिरेव। वैश्वदेविकविप्रव-

१ ख. °न्तौ पू°। २ ग. °नां पि°।

मने सर्वेषां होम एव न श्राद्धावृत्तिः। अङ्गत्वादग्नौकरणहोमवैकल्ये प्रायश्चित्तमात्रं कर्तव्यं न तु श्राद्धावृत्तिः। केचिद्धोमस्यापि प्राधान्यात्तद्वैकल्ये श्राद्धावृत्तिरित्याहुस्तच्चिन्त्यम्। वस्तुतस्तु होमोऽङ्गमेवेति दिक्। इदं प्रत्याब्दिकश्राद्धे सपिण्डीकरणादौ मासिकश्राद्धेषु महैकोद्दिष्टादौ मघादौ सपिण्डकवृद्धिश्राद्धे च ज्ञेयम्। नित्यश्राद्धसांकल्पिकश्राद्धादौ भोजनप्राधान्याद्भोजनसमये वान्तावावृत्तिरेव। भोजनोत्तरं वमने होम एव नाऽऽवृत्तिः। दर्शादौ तु वान्तावामेन तदैव कार्यम्। तीर्थमहालयादौ दर्शवदिति केचित्। आरब्धं श्राद्धं समापनीयमेव। एतन्मूलवाक्यानि निर्णयसिन्धुहेमाद्र्यादौ द्रष्टव्यानि। विप्रगुदस्रावे पृथ्वीचन्द्रोदये भरद्वाजः—

भुञ्जानेषु तु विप्रेषु प्रमादात्स्रवते गुदम्।
पादकृच्छ्रं ततः कृत्वा अन्यं विप्रं नियोजयेत्॥ इति।

क्षणपाद्यादि दत्त्वेति कमलाकरः। भोजनसमये विप्रस्य शूद्रादिस्पर्शादिना भोजनानधिकारित्वेऽप्येवमेव ज्ञेयम्। मार्जारस्पर्शे स्पृष्टाङ्गं प्रक्षाल्याप उपस्पृश्य विष्णुं स्मरेत्। उच्छिष्टसमयेऽनुष्ठानसमये च मार्जारस्पर्शे स्नानमिति प्रायश्चित्तेन्दुशेखरे। तत्पक्षे स्नानप्रसक्तौ भोजनानधिकारोऽर्थसिद्धः। इदं यथाचारमनुष्ठेयम्। विप्रस्य त्वापस्तम्ब आह—

भुञ्जानस्य तु विप्रस्य कदाचित्स्रवते गुदम्।
उच्छिष्टमशुचित्वं च प्रायश्चित्तं कथं भवेत्॥
आदौ कृत्वा तु वै शौचं ततः पश्चादपः स्पृशेत्।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति॥ इति।

मूत्रकरणेऽप्येतदेव ज्ञेयम्। शूद्रस्पर्शादावपि उपवासं पञ्चगव्यप्राशनं च कुर्यादित्यलमतिविस्तरेण। इति प्रायश्चित्तानि।

*विप्रभोजनोत्तरं कृत्यमाह व्यासः—*

तृप्ताः स्थेति तु पृष्टास्ते ब्रूयुस्तृप्ताः स्म इत्यथेति। आचार्यः—तृप्ताञ्ज्ञात्वा मधुमतीः श्रावयेदक्षन्नमीमदन्तेति चेति। अत्रापि गायत्रीं जपित्वा मधुमतीः श्रावयेदिति कमलाकरः। ततः श्राद्धं संपन्नमिति प्रश्नः। शौनकः—

अन्नशेषैश्च किं कार्यमिति पृच्छेत तांस्ततः ।
स इष्टैः सह भोक्तव्यमिति प्रत्युक्तिपूर्वकम् ॥
प्रदद्युः सकलं तस्मै स्वी कुर्युर्वा यथारुचि । इति ।

अत्रायमनुष्ठेयार्थः–भुक्तशेषात्सार्वर्णिकमन्नं पिण्डार्थं प्रकिरणार्थं च पृथक्पृथगुद्धृत्य शेषं ब्राह्मणेभ्यो निवेदयेत् । शेषमन्नं किं क्रियतामिति प्रश्नः । यदीष्टैः सह भुज्यतामिति तेषां प्रत्युक्तिस्तदा तेनैवान्नेन वैश्वदेवादि कृत्वा शेषमन्नमिष्टैः सह भुञ्जीयात् । अभ्यनुज्ञाभावे तदन्नं तेभ्यो निवेद्य पुनरन्नं निष्पाद्य तेन वैश्वदेवादि सर्वं कुर्यादिति ।

ततः पिण्डदानम् । तत्कालो वक्ष्यते श्राद्धचन्द्रिकायाम्—

यजमानस्य दासादीनुद्दिश्य द्विजसत्तमः ।
पात्रादन्नं त्यजेद्भूमौ वामभागे तु पैतृके ॥

उत्तरापोशनार्थमुदकं पितृपूर्वकं दद्यादिति पूर्वमेवोक्तम् । शातातपः–

विश्वदेवनिविष्टानां चरमं हस्तधावनम् ।

सिन्धौ—पवित्रग्रन्थिमुत्सृज्य मण्डले भुवि निक्षिपेत् ।
हस्तादीन्क्षालयेद्विद्वाञ्शरावादौ तु कुत्रचित् ॥

व्यासः—ताम्बूलोद्गिरणं चैव गण्डूषोद्गिरणं तथा ।
कांस्यपात्रे तथा ताम्रे न कुर्वीत कदाचन ॥
उष्णोदकैर्धान्यचूर्णैः करौ श्मश्रूणि शोधयेत् ॥ इति ।

अथ पिण्डदानम् । तत्र सूत्रम्–भुक्तवत्स्वनाचान्तेषु पिण्डान्निपृणीयादाचान्तेष्वेक इति । भुक्तवत्स्विति पूर्वं निषेधार्थमिति कमलाकरः । तेन भोजनात्पूर्वं शाखान्तरोक्तकालसत्त्वेऽप्याश्वलायनैर्भोजनोत्तरमेव कार्यमिति सिद्धम् । अनाचान्तेष्वित्यत्राऽऽचमनशब्देनोत्तरापोशनगण्डूषकरणहस्तक्षालनादिशुद्धा(द्ध्या)चमनान्तं कर्म गृह्यते । गण्डूषं दत्त्वा तेष्वाचान्तेष्वनाचान्तेषु वेति परिशिष्टोक्तेः । तेनोत्तरापोशनात्पूर्वं पिण्डनिपरणमिति गम्यते । केचिच्छुद्धा(द्ध्या)चमनात्पूर्वमित्याहुस्तच्चिन्त्यम् । तच्च पिण्डदानमग्नावग्नौकरणपक्षेऽग्निसमीपे कर्तव्यम् । पाणिहोमपक्षे विप्रोच्छिष्टतोऽरत्नित्रयपरिमिते देशे कर्तव्यमिति चन्द्रिकायाम् । व्याममात्र इति सिन्धौ । व्यामश्चतुररत्निः । स्थलसंकोचादौ त्वरत्निमात्रे, अपहता इति लेखाकरणं स्फ्याभावे कुशमूलेनेति चन्द्रिकायाम् । एकेनैव दक्षिण-

१ ग °द्वकारिका° । २ ग °क्षिणेन ह° ।

पक्षे हस्तेनेति वृत्तिः । सव्योत्तराभ्यां पाणिभ्यामिति केचित् । प्रतिपार्वणं लेखाकरणं बर्हिरास्तरणमुदकनिनयनं चाऽऽवर्तते । तत्क्रममाह कमलाकरः—पितृपार्वणात्पश्चिमे मातृभ्यः पिण्डदानं तत्पश्चिमे मातामहेभ्यः, तत्पश्चिमे मातामहीभ्यः, तत्पश्चिम एकोद्दिष्टेभ्य इति । सूत्रं च—पूर्वासु पितृभ्यो दद्यादपरासु स्त्रीभ्य इति । केचिदाग्नेयीसंस्थं दक्षिणापवर्गं पिण्डदानमिति वदन्ति तन्मते पूर्वोक्तः पूर्वशब्द आग्नेयीवाचकः पश्चिमशब्दो यथार्थदिग्वाचकः । तेनाऽऽग्नेयीसंस्थं दक्षिणापवर्गं पिण्डदानं भवतीति । शुन्धन्तामित्युदकं निनीय

शुक्लाम्बराः शुक्लगन्धाः शुक्लयज्ञोपवीतिनः ।
आत्मनोऽभिमुखासीना ज्ञानमुद्रा निरायुधाः ॥
वसवः पितरो ज्ञेया रुद्रास्तत्र पितामहाः ।
पितुः पितामहाः प्रोक्ता आदित्या बर्हिषि स्थिताः ॥

इति तत्स्थान्पितॄन्ध्यायेदिति रघुनाथीये । पिण्डदानमन्त्रे ये च त्वामत्रान्विति । अत्र स्त्रीश्राद्धे याश्च त्वामत्राऽन्वियूह इति हेमाद्रिस्तदन्यशाखाविषयम् । आश्वलायनानां तु यथापाठमेव । वृत्तिकारेण तथैवोक्तत्वात् । मन्त्रस्तु एतत्त इत्युक्त्या, असावित्यत्र संबन्धनामगोत्रविशिष्टं पित्रादिनाम संबुद्ध्यन्तमुक्त्वा तदन्ते ये च त्वामत्रान्विति वदेत् । गृह्यपरिशिष्टे तु—ये च त्वामत्रान्विरयन्ते तेभ्यश्चेति मन्त्रशेषः । वृत्तिकारेण तु *अन्वष्टक्यप्रकरणेऽस्मत्पितरमुकशर्मन्नमुकगोत्र वसुरूपैतत्पिण्डीभूतमन्नं* तुभ्यं स्वधा ये च त्वामत्रानुगच्छन्ति तेभ्यश्चेत्युक्तः ।
लौगाक्षिरपि—महालये गयायां च प्रेतश्राद्धे दशाहिके ।

पिण्डशब्दप्रयोगः स्यादन्नमन्यत्र कीर्तयेत् ॥ इति ।

वायवीये—मधुसर्पिस्तिलयुतांस्त्रीन्पिण्डान्निर्वपेद्बुधः ।
स्मृतिसारे—माषाः श्राद्धेषु वै ग्राह्या वर्ज्याश्चाग्निपिण्डयोः ॥
एतन्निर्मूलकमिति कमलाकरः । सर्वान्नग्रहणस्योक्तत्वात् ।
अथ पिण्डप्रमाणम् । प्रयोगरत्नेऽन्त्येष्टिपद्धतौ—

एकोद्दिष्टे सपिण्डे च कपित्थं तु विधीयते ।
नालिकेरप्रमाणं तु प्रत्यब्दे मासिके तथा ॥
तीर्थे दर्शे च संप्राप्ते कुक्कुटाण्डप्रमाणतः ।
*महालये गयाश्राद्धे कुर्यादामलकोपमम्* ॥ इति ।

---

१ ग °क्रम् । पू° । २ ख °त्स्थानात्पितॄ° । ३ क ख °मन्त्र प्रको° ।

अनुक्तौ सामान्यप्रमाणं ग्राह्यम् । तदाह हेमाद्रावङ्गिराः—

कपित्थबिल्वमात्रान्वा पिण्डान्दद्याद्विधानतः ।
कुक्कुटाण्डप्रमाणान्वाऽऽमलकैर्बदरैः समान् ॥ इति ।

तत्रैव धूम्रः–कपित्थस्य प्रमाणेन पिण्डान्दद्यात्समाहितः ।
तत्समं विकिरं दद्यात्पिण्डान्तेषु षडङ्गुले ॥

कालिकायामाश्वलायनः–

यत्र स्युर्बहवः पिण्डास्तत्र बिल्वफलोपमाः ।
यत्र चैको भवेत्पिण्डस्तत्र खर्जूरसंनिभः ॥ इति ।

त्रयाणामुत्तरोत्तरं पिण्डप्रमाणाधिक्यमिति मैत्रायणीये । पिण्डप्रदानानन्तरं दर्भमूले कराग्रघर्षणमिति चन्द्रिकायाम् । तेषु दर्भेषु तं हस्तं निमृज्याल्लेपभागिनामिति मनूक्तेः । आचार्योऽपि स्मृतिरूपेणाऽऽह–

पितुः पितामहादूर्ध्वं ये त्रयः पितरः स्मृताः ।
ते लेपान्नेन तृप्यन्ति तेषां कार्यं हि तर्पणम् ॥ इति ।

तदनन्तरमत्र पितर इत्यनुमन्त्रणादि । अस्मिन्प्रकरणे यद्यपि पिण्डानामेवानुमन्त्रणमुपस्थानं प्रवाहणं च विधीयते तथाऽपि मन्त्राणां पितृलिङ्गत्वात्पिण्डा एव पितर इति कृत्वा पितर एवैतैर्मन्त्रैरभिधातव्या इति वृत्तिकृत् । शुन्धन्तां पितर इति द्वितीयनिनयनान्ते कर्तव्यमाहाऽऽचार्यः—

ततः सम्यग्द्विराचम्य नीवीं विस्रस्य वाग्यतः ।

सूत्रं तु असावभ्यङ्क्ष्वासावङ्क्ष्वेति पिण्डेष्वभ्यञ्जनाञ्जने वासो दद्याद्दशामूर्णास्तुकां वा पञ्चाशद्वर्षताया ऊर्ध्वं स्वलोमेति कृष्णतिलतैलेनाभ्यञ्जनम् । त्रैककुदेनाञ्जनमिति सिन्धौ । त्रिककुन्नाम पर्वतविशेषः । तत्रोद्भवमित्यर्थः । एतद्व इति वासोदानं प्रतिपिण्डं मन्त्रावृत्त्येति केचित् । बहुवचनलिङ्गात्सर्वेभ्यः सकृन्मन्त्रेणेत्यन्ये । पित्रादित्रिभ्यः सकृन्मन्त्रेण वासोदानमिति वृत्तिकृत् । प्रतिपार्वणं मन्त्रावृत्तिरिति कारिकाकारः । अत्र वासस्थाने दशामूर्णास्तुकां वा दद्यादित्यर्थः । दशा वस्त्रस्यान्तप्रदेशः । ऊर्णास्तुका मेषलोमनिर्मिता रज्जुः । पञ्चाशद्वर्षोर्ध्वं जीवन्स्वीयमेव लोम वासोर्थं दद्यात् । मन्त्रस्त्वयमेव सर्वेषु द्रव्येष्विति वृत्तिकृत् ।

व्याघ्रः–गन्धपुष्पाणि धूपं च दीपं च विनिवेदयेत् ।
दक्षिणां सर्वभोगांश्च प्रतिपिण्डं प्रदापयेत् ॥

१ क. ग. °मात्राश्च वि । २ क ग. °माणाश्चाऽऽम° । ३ ग. श तृप्यन्तु । ४ क. ग तत्रापि ।

शङ्खः—यत्किंचित्पच्यते गेहे भक्ष्यं भोज्यमगर्हितम्।
अनिवेद्य न भोक्तव्यं पिण्डमूले कथंचन॥
एतत्सव्येनेति केचित्। युक्तं त्वपसव्येनेति कमलाकरः।

अथ पिण्डोपघाते प्रायश्चित्तम्। स्मृतिदर्पणेऽत्रिः—
मार्जारमूषकस्पर्शे पिण्डे च विदलीकृते।
पुनः पिण्डाः प्रदातव्यास्तेन पाकेन तत्क्षणात्॥

चन्द्रिकायां बौधायनः—
श्वचाण्डालादिभिः स्पृष्टः पिण्डो यद्युपहन्यते।
प्राजापत्यं चरित्वाऽथ पुनः पिण्डं समाचरेत्॥
पुनः स्नात्वा तदा कर्ता पिण्डं कुर्याद्यथाविधि।

इति जातूकर्ण्यपाठः। काकस्पर्शे न दोष इति कमलाकरः। पिण्डदानप्रभृतिपिण्डप्रवाहणपर्यन्तमेतत्। प्रवाहणानन्तरं पत्न्याः प्राशनपर्यन्तमुपघाते प्राशनस्य लोपः। अप्स्वेव प्रतिपत्तिः।

अथ प्रयोगक्रमः। उपस्थानानन्तरमुपविश्य
पिता पितामहश्चैव तथैव प्रपितामहः।
तृप्तिमायान्तु पिण्डेन मया दत्तेन भूतले॥
मातामहस्तत्पिता च पिता तस्यापि तृप्यतु।
द्विजानां तर्पणाद्धोमात्पिण्डदानाच्च मे दिवि॥

इति केचित्पठन्ति। ततः परेतनेति मन्त्रेणाऽऽग्नेयीं प्रति पिण्डान्प्रवाह्य सकुटुम्बः पिडान्नमस्कृत्य वीरं मे दत्त पितर इति मन्त्रेण मध्यमं पिण्डमादायाऽऽधत्त पितर इति मन्त्रेण पत्नीं[1] प्राशयेत्। पिण्डपट्के मध्यमयोर्द्वयोः प्राशनम्। तदुक्तं मनुना—
पतिव्रता धर्मपत्नी पितृपूजनतत्परा।
मध्यमं तु ततः पिण्डद्वयमद्यात्सुतार्थिनी॥
आयुष्मन्तं सुतं सूते यशोमेधासमन्वितम्।
धनवन्तं प्रजावन्तं सात्त्विकं धार्मिकं तथा॥ इति।

अनेकभार्यापक्षे छागलेयः—
प्राचीनावीतिनाऽऽमन्त्र्य पत्नीपिण्डो विभज्यते।
प्रतिपत्नि तु मन्त्रस्य कर्तव्याऽऽवृत्तिरत्र तु॥

---

१ क. ख पत्न्या।

प्रयोगपारिजाते तु—षड्दैवतश्राद्धे पत्नीद्वित्य एकैकमेकैकस्यै दद्यात्। बह्वीषे तु गुणवते( त्यै ? ) वयतः कालतश्च समर्थाभ्यां दद्यात् । सर्वाः समर्थाश्चेद्गुणकालानुसारेण दद्यात् । अथवैकैकस्मिञ्श्राद्धे एकैकस्यै दद्यादिति । मध्यमपिण्डप्राशनं च केवलं काम्यमेव न नित्यमिति मयूखे । पिण्डप्राशननिषेधश्चन्द्रिकायाम्—

अक्षता गुर्विणी वन्ध्या गतरक्ता रजस्वला ।
नाश्नीयान्मध्यमं पिण्डं जारिणी च प्रसूतिका ॥

न विद्यते क्षतं रजो यस्याः साऽक्षता । अप्राप्तरजोदर्शनेत्यर्थः । पत्न्यामनधिकारिण्यां मध्यमपिण्डप्रतिपत्तिमाह बृहस्पतिः—

अन्यदेशगता पत्नी रोगिणी गर्भिणी तथा ।
तदा तं जीर्णवृषभश्छागो वा भोक्तुमर्हति ॥ इति ।

प्रयोगपारिजाते आचार्यः—

आपन्नायां च भार्यायां यस्यां वीर्यं न रोहति ।
पुत्रे जाते तु षण्मासान्नारीजाते ऋतुत्रयम् ॥
दद्याति मध्यमं पिण्डं जले वाऽप्यथवाऽनले ॥ इति ।

अवशिष्टपिण्डप्रतिपत्तिमाहाऽऽचार्यः—अप्स्वितरावतिप्रणीते वा यस्य वाऽऽगन्तुरन्नकाम्याभावः स प्राश्नीयान्महारोगेण वाऽभितप्तः प्राश्नीयाद्न्यतरां गतिं गच्छतीति । याज्ञवल्क्यस्तु—

पिण्डांस्तु गोजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा ।
प्राक्षिपेद्दक्षिणामीक्षन्दिशं पितृपरायणः ॥ इति ।

कामविशेषे पिण्डप्रतिपत्तिरुक्ता ब्रह्माण्डे—

पिण्डमग्नौ सदा दद्याद्भोगार्थी प्रथमं नरः ।
पत्न्यै प्रजार्थी दद्याद्वै मध्यमं मन्त्रपूर्वकम् ॥
उत्तमां गतिमन्विच्छन्गोषु नित्यं प्रयच्छति ।
आज्ञां प्रज्ञां यशः कीर्तिमप्सु पिण्डं प्रवेशयेत् ॥
प्रार्थयन्दीर्घमायुष्यं वायसेभ्यः प्रयच्छति ।
आकाशं गमयेदप्सु स्थितो वा दक्षिणामुखः ॥ इति ।

ततो विप्राणामुत्तरापोशनं दत्त्वा तैर्गण्डूषकरणं हस्तप्रक्षालनं (त्त्वा) शुद्धाचमनं च कारयित्वा विकिरं दद्यात् । आचान्तेषु पिण्डदानमिति

---

१ क ख °त्वे गु° । २ ग °तुद्वय° ।

शुद्धा(द्धया)चमनान्ते पिण्डदानं तदन्ते विकिरदानम्। विकिरदानविधिमाह चन्द्रिकायां देवलः—

ततः सर्वाशनं पात्रे गृहीत्वा विधिवद् बुधः।
तेषामुच्छेषणस्थाने विकिरं भुवि निक्षिपेत्॥

मनुरपि—सार्ववर्णिकमन्नाद्यमानीयाऽऽप्लाव्य वारिणा।
समुत्सृजेद्भुक्तवतामग्रतो विकिरन्भुवि॥ इति।

मन्त्रस्तु ये अग्निदग्धा इति परिशिष्टे। दानमपि कुशेषु सकृदेव भवति। कमलाकरस्तु—असोमपाश्चेति मन्त्रेण दैवेऽसंस्कृतप्रमीता इति मन्त्रेण पित्र्येऽन्नं प्रकीर्य ये अग्निदग्धा इति मन्त्रेणोच्छिष्टपिण्डं कुशोपरि पृथग्दद्यादिति पक्षान्तरमाह। शिष्टाचारोऽप्येवमेव। केचित्पत्युच्छिष्टं विकिरदानमित्याहुस्तत्र मूलं मृग्यम्। कारिकाभाष्ये—

विकिरं ग्रासमात्रं तु न तद्दद्यात्पृथक्पृथक्।
उद्धृत्य सर्वमन्नं तत्पङ्क्तिमूर्धनि दापयेत्॥

इति पृथग्दाने निषेधदर्शनात्। पिण्डसंनिधौ विकिरदानमाह धूम्रः—

कपित्थस्य प्रमाणेन पिण्डं दद्यात्समाहितः।
तत्समं विकिरं दद्यात्पिण्डान्तेषु षडङ्गुले॥ इति।

ब्राह्मे—ततः प्रक्षाल्य हस्तौ च द्विराचम्य हरिं स्मरेत्।

व्यासः—उच्छिष्टेऽव विकिरं तद्वैव प्रतिपादयेत्।

भृगुः—पिण्डवत्प्रतिपत्तिः स्याद्विकिरस्येति तौल्वलिः।

चन्द्रिकायाम्—यदुक्तं पिण्डदानस्य तत्कर्म विकिरस्य च।
क्षिपेत्पिण्डाञ्जले वाऽग्नौ विकिरं तत्र निक्षिपेत्॥ इति।

विकिरणानन्तरं कर्तव्यतोक्ता परिशिष्टे—अथ ब्राह्मणहस्तेष्वपो दर्भांश्च दत्त्वा यवांस्तिलांश्चावधाय पुनरपो दद्यादेषा हस्तशुद्धिरिति।

मात्स्ये—तेष्वाचान्तेषु चाऽऽचम्य वारि दद्यात्सकृत्सकृत्।
तैलपुष्पाक्षतान्पश्चादक्षय्योदकमेव च॥

आचान्तेष्विति यदुक्तं तच्छाखान्तराभिप्रायम्। दैवे यवानेव। अत्र दैवे सव्यं पित्र्ये त्वपसव्यमिति कर्कः। उभयत्र सव्येनैवेति कमलाकरः। अत्र शिवा आपः सन्त्वित्यादिप्रयोगो ज्ञेय इति स एव।

---

१ ग. °पणस्थान°। २ ग °प्येऽपि-वि°। ३ म न दद्या°। ४ ग °र हदै°।

मात्स्ये—अघोराः पितरः सन्तु सन्त्वित्युक्ते पुनर्द्विजैः ।
गोत्रं तथा वर्धतां नस्तथेत्युक्तः स तैः पुनः ॥

कारिकाभाष्ये वृद्धयोगीश्वरः—
ततश्च तिलकं कुर्यान्मन्त्रेणानेन भक्तितः ।

मन्त्रस्तु—नित्यानुष्ठानसिद्ध्यर्थं सर्वदाऽध्यात्मशुद्धये ।
पितृमातृपराः सन्तः सन्त्वस्मत्कुलजा नराः ॥ इति ।

अत्राप्यूर्ध्वपुण्ड्रनिषेध इति कमलाकरः। चन्द्रिकायां भविष्योत्तरे—
चालयेद्विप्रपात्राणि स्वयं शिष्योऽथवा सुतः ।
न स्त्री प्रचालयेत्तानि हीनजातिर्न चाग्रजः ॥

अग्रजो ज्येष्ठभ्राता । यजमानापेक्षयाऽधिकवयस्क इति हेमाद्रिः । अत्रोच्छिष्टपात्रचालनमात्रं नोद्वासनम् । उद्वासनस्य कालान्तरोक्तत्वात् । पात्रचालनानन्तरं कर्तव्यमाह जातूकर्ण्यः—
स्वस्तिवाच्यं ततः कुर्यादक्षय्योदकमेव च ।

वृद्धशातातपः—पितॄणां नामगोत्रेण करे देयं तिलोदकम् ।
प्रत्येकं पितृतीर्थेन अक्षय्यमिदमस्त्विति ॥

ततः पूर्वस्थापितं प्रथमार्घ्यपात्रं चालयेत् ।

नागरखण्डे—उत्तानमर्घ्यपात्रं तु कृत्वा दद्याच्च दक्षिणाम् ।
हिरण्यं देवतानां च पितॄणां रजतं तथा ॥

अतिदरिद्रस्य दक्षिणोक्ता सौरपुराणे—
यज्ञोपवीतमथवा ह्यतिदारिद्र्यपीडितः ।
प्रदद्याद्दक्षिणार्थं वै तेन स्यात्कर्म साङ्गुणम् ॥

कालिकायामाचार्यः—दद्याद्यज्ञोपवीत्येव ताम्बूलं दक्षिणां तथा। इति।

आदौ पै(पि)त्र्यविप्रेभ्यः पश्चाद्दैविकविप्रेभ्य इति चन्द्रिकायाम् । दक्षिणादानं सव्येनेति वृत्तिकृत्। पित्रुद्देशेन दक्षिणादानेऽपसव्यं विप्रोद्देशे तु सव्यमिति माधवः। दक्षिणा च विप्रगुणानुरोधेन विषमाऽपि देया ।
एकपङ्क्त्युपविष्टानां विप्राणां श्राद्धकर्मणि ।
भक्ष्यं भोज्यं समं देयं दक्षिणा त्वनुसारतः ॥

इति मयूखोदाहृतवचनात् । एतस्मिन्काले सति संभवे विशेषदक्षिणोक्ता मत्स्यपुराणे—

---

१ ग मत्स्यभों° ।

गोभूहिरण्यवासांसि यानानि शयनानि च ।
दद्याद्यदिष्टं विप्राणामात्मनः पितुरेव च ॥ इति ।

अन्यान्यपि दीपिकाधूपपात्रकञ्चुकोर्ण्णापोदककमण्डलुच्छत्रोपानद्दर्पणव्यजनताम्बूलचामरसुवर्णाद्यलंकारशय्यासनसुगन्धहसन्तिकापतद्ग्राहगण्डूषपात्रभोजनपात्रतदाधारादीनि प्रदेयानि । दक्षिणादानानन्तरं कर्तव्यमाह निर्णयसिन्धावत्रिः—

वदेच्च तांस्ततो विप्रान्पित्रादिभ्यः स्वधोच्यताम् ॥ इति ।

ततो विश्वे देवाः प्रीयन्तां पितरः प्रीयन्तामिति वाचनमिति चन्द्रिकायाम् । अत्र प्रतिवचनान्ते शोभनं हविरिति विप्रा ब्रूयुः । उक्तं च प्रयोगपारिजाते वसिष्ठेन—

श्राद्धावसाने कर्तव्या द्विजैरन्नगुणस्तुतिः ॥ इति ।

दक्षिणादानोत्तरमर्घ्यपात्रचालनमुक्तं मयूखे । तत्रत्यवचनम्—

यस्मिंस्ते संस्रवाः पूर्वं पितृपात्रे निवेशिताः ।
पितृपात्रं तदुत्तानं कृत्वा विप्रान्विसर्जयेत् ॥ इति ।

मात्स्ये—वाजे वाज इति जपन्कुशाग्रेण विसर्जयेत् ।

पितृपूर्वं विसर्जयेदिति प्रचेताः । विसर्जनवाक्यमाहाऽऽचार्यः—ॐ स्वधोच्यतामिति विसृजेदस्तु स्वधेति वा पिण्डनिपरणदेशं संसृज्य तिलान्विकीर्य शान्तिरस्त्विति जलं क्षिपेदिति । चन्द्रिकायां ब्रह्मवैवर्ते—

आमावाजेति मन्त्रं च पठित्वा च प्रदक्षिणम् ।

शौनकः—ब्राह्मणानथ निर्यातान्परीत्य त्रिः प्रदक्षिणम् ।
सस्त्रीकः प्रणमेत्सार्धं स्वजनै रचिताञ्जलिः ॥
कनिष्ठप्रथमा ज्येष्ठचरमाः स्युः प्रदक्षिणे ।

प्रदक्षिणादि मण्डलदेशे कार्यमिति हेमाद्रिः ।

ब्रह्मवैवर्ते—प्राञ्जलिश्च ततः प्राह तान्विप्रान्सत्यवादिनः ।

मनुः—विसृज्य ब्राह्मणांस्तांस्तु नियतो वाग्यतः शुचिः ।
दक्षिणां दिशमाकाङ्क्षन्याचेतेमान्वरान्पितॄन् ॥
दातारो नोऽभिवर्धन्तां वेदाः संततिरेव नः ।
श्रद्धा च नो मा व्यगमद्बहुदेयं च नोऽस्त्विति ।

---

१ क ख °र्ज्जितदक्ष° ।

बौधायनः—अन्नं च नो बहु भवेदतिथींश्च लभेमहि ।
याचितारश्च नः सन्तु मा च याचिष्म कंचन ॥ इति ।

अत्र दातारो नोऽभिवर्धन्तामित्याद्यूहेन विप्रैः प्रतिवचनं कार्यमिति सुदर्शनभाष्ये । अत्र स्वादुषंसदः० ब्राह्मणासः पितरः० इति मन्त्रद्वयं च पठेयुरिति कमलाकरः । इहैव स्तं मा वियौष्टं०

आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ।
प्रयच्छन्तु तथा राज्यं प्रीता नृणां पितामहाः ॥

इति च पठित्वाऽऽशिषो दद्युरिति चन्द्रिकायाम् । ततो विप्रान्पादसंवाहनादिभिः परितोष्य प्रणिपत्य प्रार्थयेत् । प्रार्थनामाह हेमाद्रौ बृहस्पतिः—

अद्य मे सफलं जन्म भवत्पादाब्जवन्दनात् ।
अद्य मे वंशजाः सर्वे याता वोऽनुग्रहाद्दिवम् ॥
पत्रशाकादिदानेन क्लेशिता यूयमीदृशाः ।
तत्क्लेशजातं चित्ते तु विस्मृत्य क्षन्तुमर्हथ ॥

यस्य स्मृत्येत्याद्यश्चन्द्रिकादावुक्ताः ।

विष्णुः—मन्त्रहीनं क्रियाहीनं भक्तिहीनं द्विजोत्तमाः ।
श्राद्धं संपूर्णतां यातु प्रसादाद्भवतां मम ॥ इति ।

वसिष्ठासः पितृ० देवान्वसिष्ठो०दान इति मन्त्रद्वयमिदं पितृभ्यो नमो अस्त्वद्येति ब्राह्मणं च पठेदिति चन्द्रिकायाम् । ततः कर्मेश्वरार्पणं कृत्वा विप्रैः सहाष्टौ पदानि सपरिवारोऽनुव्रज्य विसर्जयेदिति कारिकाभाष्ये । उक्तं च प्रचेतसा—

विसृजेद्भक्तिसंयुक्तः सीमान्तं चाप्यनुव्रजेत् ॥ इति ।

विप्रोच्छिष्टोद्वासनकालः कूर्मपुराणे—

नोद्वासयेत्तदुच्छिष्टं यावन्नास्तमितो रविः । इति ।

इदं गृहान्तरसत्त्व इति कमलाकरः । गृहैकत्वे तु मनुः—उच्छेषणं तु तत्तिष्ठेद्यावद्विप्रा विसर्जिताः । तत्प्रतिपत्तिमाह जातूकर्ण्यः—

द्विजभुक्तावशिष्टं तु सर्वमेकत्र संहरेत् ।
शुचिभूमौ प्रयत्नेन निखन्याच्छादयेद्बुधः ॥ इति ।

ब्रह्माण्डे—शूद्राय चानुपेताय श्राद्धोच्छिष्टं न दापयेत् ।
यो दद्याद्रागतो मोहान्न तद्गच्छति वै पितॄन् ॥ इति ।

---

१ क ख आतचितारस्तु वि'।

विप्रविसर्जनानन्तरं पूर्वं प्रतिविप्रं स्थापितदीपान्निर्वासयेदिति कारिकाभाष्ये । ततोऽगारं गोमयेनोपलेपयेदिति वाजपेययाजिपद्धतौ ।

अथ वैश्वदेवनिर्णयः । तत्र बह्वृचैराहिताग्निभिरनाहिताग्निभिरनाग्निकैश्च सर्वैः सर्वश्राद्धेषु श्राद्धान्ते श्राद्धशेषेण वैश्वदेवः कार्य इति वृत्तिकारप्रभृतयो बहवः । केचिद्बह्वृचैराहिताग्निभिः सर्वेषु श्राद्धेषु श्राद्धादौ पृथक्पाकेन वैश्वदेवः कार्य इत्याहुस्तत्पक्षे दर्शे क्रममाह लौगाक्षिः—

पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः ।
पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः ॥ इति ।

पक्षान्तं कर्मान्वाधानम् । अन्वाहार्यकं दर्शश्राद्धम् । हेमाद्रौ मार्कण्डेयः—

ततो नित्यक्रियां कुर्याद्भोजयेच्च ततोऽतिथीन् ।
ततस्तदन्नं भुञ्जीत सह भृत्यादिभिर्नरः ॥ इति ।

ततः श्राद्धशेषात् । नित्यक्रिया नित्यश्राद्धम् । तच्चाग्रे वक्ष्यते । मत्स्यपुराणे—

ततश्च वैश्वदेवान्ते सभृत्यः सहबान्धवः ।
भुञ्जीतातिथिसंयुक्तः सर्वं पितृनिषेवितम् ॥ इति ।

सर्वं पर्यादिनिषिद्धमाषाद्यपीत्यर्थः । इदं भोजनं श्राद्धाङ्गमेव विहितं न तु रागप्राप्तमिति कमलाकरः । अभोजने दोषमाह देवलः—

श्राद्धं दत्त्वा तु यो विप्रो न भुङ्क्ते चेत्कदाचन ।
देवा हव्यं न गृह्णन्ति कव्यानि पितरस्तथा ॥

भोजनकालमाह जातूकर्ण्यः—

अहन्येव तु भोक्तव्यं कृते श्राद्धे द्विजन्मभिः ।
अन्यथा ह्यासुरं श्राद्धं परपाके च सेविते ॥

उपवासप्राप्तौ यत्र कृष्णैकादश्यादावुपवासो नाऽऽवश्यकस्तत्र पैतृत्या भुञ्जीतैव । यत्र तु शिवरात्र्येकादश्यादावुपवास आवश्यकस्तत्र श्राद्धशेषान्नस्यावघ्राणमेवेति कमलाकरः । व्यासोऽपि—

उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत् ।
उपवासं तदा कुर्यादाघ्राय पितृसेवितम् ॥ इति ।

---

१ ग पैतृैव वै° ।

काम्योपवासेऽप्याग्रेयमेव । ग्रहणवेधे तु भुञ्जीतेति कमलाकरः। हेमाद्रिस्तु यत्रोपवास आवश्यकस्तत्रैकभक्तमयाचितं वा कार्यमित्याह। अन्यश्राद्धशेषभोजने तु जाबालिः-

विप्रस्त्वन्यगृहे श्राद्धशिष्टान्नं भोजनं चरेत् ।
प्राजापत्यं विशुद्धिः स्याज्ज्ञातिगोत्रे न दोषकृत् ॥
श्वशुरस्य गुरोर्वाऽपि मातुलस्य महात्मनः ।
ज्येष्ठभ्रातुश्च पुत्रस्य ब्रह्मनिष्ठस्य योगिनः ॥
एतेषां श्राद्धशेषान्नं भुक्त्वा दोषो न विद्यते ।

आचार्यः—न शूद्रं भोजयेत्तस्मिन्गृहे यत्नेन तद्दिने ।
श्राद्धशेषं न शूद्रेभ्यः प्रदद्यादखिलेष्वपि ॥ इति।

अथ श्राद्धाङ्गतर्पणम् । तत्कालमाह निर्णयसिन्धौ कपिलः-

मन्वादिषु युगाद्यासु दर्शसंक्रमणेषु च ।
पौर्णमास्यां व्यतीपाते दद्यात्पूर्वं तिलोदकम् ॥
अर्धोदये गजच्छाये षष्ठ्यां चैव महालये ।
भरण्यां च मघाश्राद्धे श्राद्धान्ते तर्पणं विदुः ॥

षष्ठ्यां कपिलषष्ठ्याम् । शौनकः-

मातापित्रोर्मृताहे तु परेऽहनि तिलोदकम् ।

गर्गः-पक्षश्राद्धे हिरण्ये च अनुव्रज्य तिलोदकम् ॥
सकृन्महालये श्वः स्यादष्टकास्वन्त एव हि ।

वैधृतिश्राद्धे तु श्राद्धात्पूर्वमेव। तीर्थश्राद्धादौ विशेषाभावाद्दर्शवत्पूर्वमेव तर्पणमिति चन्द्रिकायाम् । श्राद्धाङ्गतर्पणस्य निषेधो बृहन्नारदीये-

वृद्धिश्राद्धे सपिण्डे च प्रेतश्राद्धेऽनुमासिके ।
संवत्सरविमोके च न कुर्यात्तिलतर्पणम् ॥

श्राद्धाङ्गमित्यर्थः । यत्र दर्शश्राद्धादौ श्राद्धात्पूर्वं तर्पणं विहितं तत्र मध्याह्ने स्नात्वा मध्याह्नसंध्यां विधाय ब्रह्मयज्ञं कृत्वा तदङ्गतर्पणेन सह दर्शश्राद्धाङ्गतर्पणस्य तन्त्रेणानुष्ठानं प्रसङ्गसिद्धिर्वा । अन्ये तु नित्यतर्पणं मातृपितृवर्गयोर्भिन्नं दर्शादौ तु सपत्नीकस्य पितृवर्गस्येति देवताभेदात्तन्त्रेणानुष्ठानं न युक्तमिति वदन्ति। अस्मिन्पक्षे कालान्तरे ब्रह्मयज्ञकरणपक्षे वा दर्शादिश्राद्धाङ्गं सतिलं तर्पणं कृत्वा श्राद्धारम्भः कर्तव्यः । यत्र पक्षश्राद्धादौ श्राद्धान्ते तर्पणं विहितं तत्र तर्पणं कृत्वैव वैश्वदेवः कार्यः । प्रमादात्तदकरणे वैश्व-

१ ग. °द्धशिष्टान्नं । २ क ख °ष्टकास्वन्त° ।

देवान्ते कार्यम् । वैश्वदेवान्ते ब्रह्मयज्ञकरणपक्षे कामं भवतु प्रसङ्गस्तन्त्रं वा । यत्र प्रत्याब्दिकमहालयादौ परेऽहनि तर्पणं विहितं तत्र स्नात्वा प्रातःसंध्यामुपास्य श्राद्धाङ्गतर्पणं विधाय पुनः स्नात्वा शेषमाह्निकं कुर्यात् । पित्रादिवार्षिके तु नित्यतर्पणं तिलवर्जं कर्तव्यम् । विवाहाद्यनन्तरं विवाहादिप्रयुक्तसतिलनित्यतर्पणनिषेधे श्राद्धात्पूर्वं श्राद्धोत्तरं वा तत्तदुक्तकाले श्राद्धाङ्गत्वेन भिन्नमेव सतिलं तर्पणं कार्यम् । तत्र न तन्त्रप्रसङ्गौ । एतत्तर्पणं येषां श्राद्धं क्रियते तेषामेव । यत्र सकृन्महालयादौ सर्वेषां पितॄणां श्राद्धं क्रियते तत्र सर्वेषामेव तर्पणमिति । तर्पणविधिश्चन्द्रिकायाम्—

> स्नात्वा तीरं समागत्य उपविश्य कुशासने ।
> अपसव्यं ततः कृत्वा सव्यं जान्वाच्य भूतले ॥
> नामगोत्रस्वधाकारैर्द्वितीयान्तेन तर्पयेत् ।
> संतर्पयेत्पितॄनिज्यान्स्नात्वा वस्त्रं च धारयेत् ॥ इति ।

तर्पणोत्तरं नित्यस्नानं कुर्वेत्यर्थ इति कमलाकरः । मम तु यत्र प्रत्याब्दिकादौ परेऽहनि तर्पणं तत्रैवेदं स्नानविधानमिति प्रतिभाति । तच्च तर्पणं बह्वृचानां दक्षिणेनैव हस्तेन प्रतिदैवतं मन्त्रावृत्त्या त्रिवारं भवति । आचारार्के याज्ञवल्क्यः—

> अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु ।
> सव्योत्तराभ्यां पाणिभ्यामथवा तर्पणं भवेत् ॥

अत्र पूर्वार्धं बह्वृचान्प्रत्युत्तरार्धमन्यान्प्रतीति बोध्यमिति । केचित्तु सूत्रे त्रिवारमनुक्तत्वात्सकृदिच्छन्ति । एवं नित्यतर्पणेऽपीति कमलाकरः । तर्पणं जले क्रियते चेदार्द्रवासा एव कुर्यात् । स्थले तु शुष्कवासा एव ।

> आर्द्रवासा जले कुर्यात्तर्पणाचमनं जपम् ।
> शुष्कवासाः स्थले कुर्यात्तर्पणाचमनं जपम् ॥

इति हारीतोक्तेः । तथा चोक्तम्—

> वसित्वा वसनं शुष्कं स्थले विस्तीर्णबर्हिषि ।
> विधिज्ञस्तर्पणं कुर्यान्न पात्रेषु कदाचन ॥
> पात्राद्वा जलमादाय शुभे पात्रान्तरे क्षिपेत् ।
> जलपूर्णेऽथवा गर्ते न स्थले तु विबर्हिषि ॥ इति ।

पात्रमाह पितामहः—

हैमं रौप्यमयं वाऽपि ताम्रं कांस्यसमुद्भवम् ।
पितॄणां तर्पणे पात्रं मृन्मयं तु परित्यजेत् ॥ इति ।

जलस्नानं पात्रेणापि कार्यमिति केचित् । उक्तं त्वाचारार्के मरीचिना—

सौवर्णेन तु पात्रेण ताम्ररौप्यमयेन वा ।
औदुम्बरेण खड्गेन पितॄणां दत्तमक्षयम् ॥ इति ।

तत्रैव योगयाज्ञवल्क्यः—

यद्युद्धृतं निषिञ्चेत्तु तिलान्संमिश्रयेज्जले ।
अतोऽन्यथा तु सव्येन तिला ग्राह्या विचक्षणैः ॥ इति ।

अन्यथा, अनुद्धृतेन तर्पण इत्यर्थः । स्मृतिसारे—

जलान्ते तिलदर्भांस्तु योऽनुष्ठानाय याचते ।
नानुष्ठानफलं तस्य दातुरेव हि तत्फलम् ॥ इति ।

अथ प्रसङ्गान्नित्यतिलतर्पणे निषिद्धकाल उच्यते । वृद्धमनुः—

सप्तम्यां भानुवारे च मातापित्रोर्मृतेऽहनि ।
तिलैर्यस्तर्पणं कुर्यात्स भवेत्पितृघातकः ॥

चन्द्रिकायां गार्ग्यः—

भानौ भौमे त्रयोदश्यां नन्दाभृगुमघासु च ।
पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् ॥ इति ।

मरीचिः—सप्तम्यां रविवारे च गृहे जन्मदिने तथा ।
भृत्यपुत्रकलत्रार्थी न कुर्यात्तिलतर्पणम् ॥

वायुपुराणे—पक्षयोरुभयो राजन्सप्तम्यां निशि संध्ययोः ।

उत्तरार्धं तथैव । स्मृत्यर्थसारे—

विवाहव्रतचूडासु वर्षमर्धं तदर्धकम् ।
पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् ॥ इति ।

निर्णयसिन्धौ—वृद्धौ सत्यां च तन्मासे नेत्याहुस्तिलतर्पणम् । इति ।

संग्रहे—नन्दायां भार्गवदिने कृत्तिकासु मघासु च ।
भरण्यां भानुवारे च गजच्छायाह्वये तथा ॥
अयनद्वितये चैव मन्वादिषु युगादिषु ।
पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् ॥ इति ।

अत्र तिलतर्पणनिषेधश्चिन्त्य इति कमलाकरः । अत्र नित्यतर्पणे तिलमात्रनिषेधो न तु तर्पणनिषेधः । सिन्धौ गोभिलः—

तिलाभावे निषिद्धाहे सुवर्णरजतान्वितम् ।
तदभावे निषिञ्चेत्तु दर्भैर्मन्त्रेण वा पुनः ॥ इति ।

अत्र तिलतर्पणनिषेधकालेऽपि क्वचित्प्रतिप्रसवः पृथ्वीचन्द्रोदये—

तीर्थे तिथिविशेषे च गयायां प्रेतपक्षके ।
निषिद्धेऽपि दिने कुर्यात्तर्पणं तिलमिश्रितम् ॥

कात्यायनः—उपरागे पितुः श्राद्धे पातेऽमायां च संक्रमे ।
निषिद्धेऽपि हि सर्वत्र तिलैस्तर्पणमाचरेत् ॥

एतत्परेद्युःश्राद्धाङ्गतर्पणविषयमिति केचित् । श्राद्धाशक्तस्य तत्स्थानापन्नतर्पणविषयमिति कमलाकरः । श्राद्धाङ्गतर्पणं तु निषिद्धकालेऽपि[1] तिलैः सह भवत्येव । जीवत्पितृकेण तु श्राद्धाङ्गतर्पणं केवलजलेन कार्यमिति केचित् । अन्ये तु शुक्लतिलैरिति वदन्ति । संन्यस्ते पितरि जीवति पतिते वा तत्पुत्रेण जीवत्पितृकेणापि नित्यतर्पणं पितुः पित्रादीनां कर्तव्यमिति चन्द्रिकादौ तदपि केवलजलेन पितरि मृते तत्प्रभृत्येवेत्यलमतिविस्तरेण । अन्ये च कर्तृनिर्णयादयो विशेषा ग्रन्थान्तरतोऽवगन्तव्याः । गौरवभयान्नेहोच्यन्ते ।

इति श्रीमच्चित्तपावनकेळकरोपाभिधमहादेवात्मजबापूभट्ट-
विरचितायां श्राद्धमञ्जर्यां परिभाषाप्रकरणम् ।

---

अथ सर्वेषां श्राद्धानां प्रकृतिभूतत्वादादौ पार्वणश्राद्धमुच्यते । तत्कालमाह कारिकाकारः—

कुर्वीत पार्वणश्राद्धं दर्शे तदभिधीयते ।
कामयोगेन चान्यस्यां तिथावित्यपरेऽब्रुवन् ॥ इति ।

चन्द्रिकायां भविष्ये—

अमावास्यायां क्रियते तत्पार्वणमुदाहृतम् ।
क्रियते वा पर्वणि यत्तत्पार्वणमिति स्थितिः ॥

अत्र पर्वशब्देन कृष्णाष्टम्यादीनि गृह्यन्ते । तान्युक्तानि विष्णुपुराणे—

---

१ ग निषेधेऽपि ।

चतुर्दश्यष्टमी कृष्णा अमावास्या च पूर्णिमा ।
पर्वाण्येतानि चत्वारि रविसंक्रमणं तथा ॥ इति ।

अथ दर्शश्राद्धप्रयोगः—श्राद्धकर्ता द्यहकालत्वपक्षे श्राद्धदिनात्पूर्वेद्युः सायंहोमानन्तरं सद्यःपक्षे तु श्राद्धदिने प्रातः कृतनित्यक्रियः शुचिर्बद्धशिखो दर्भान्धारयमाणो लब्धब्राह्मणानुज्ञो यज्ञोपवीती द्विराचम्य पवित्रं ते वि० माशत इति मन्त्रेण पवित्रे धृत्वा प्राणानायम्य देशकालौ स्मरेत् । [ *श्रीमद्भगवतो महापुरुषस्य शक्त्या भ्रियमाणे भूर्लोके भूमण्डले जम्बुद्वीपे भारते वर्षे भरतखण्डे दण्डकारण्ये भूमध्यरेखायाः पश्चिमदिग्भागे गोदावर्या दक्षिणदिग्भागे कावेर्या उत्तरदिग्भागे सह्याद्रेः पश्चिमदिग्भागे पश्चिमहोदधेः पूर्वभागेऽस्मिञ्श्रीपरशुरामनिर्मिते पुण्यक्षेत्रे श्रीविष्णोराज्ञया प्रवर्तमानस्य ब्रह्मणो द्वितीयपरार्धे श्वेतवराहकल्पे वैवस्वतमन्वन्तरेऽष्टाविंशतितमे महायुगेऽस्मिन्वर्तमाने कलियुगे तत्प्रथमचरणे बौद्धावतारे शालिवाहनशके शुक्लसंवत्सर उदगयने हेमन्तर्तौ पौषे मासे कृष्णपक्षेऽमावास्यायां तिथौ मन्दवासरे श्रवणे नक्षत्रे व्यतीपातयोगे चतुष्पदकरणे मकरस्थे सूर्ये मकरस्थे चन्द्रे कुम्भस्थे भौमे कुम्भस्थे सौम्ये मीनस्थे देवगुरौ मकरस्थे शुक्रे वृश्चिकस्थे शनैश्चरे कन्यास्थे राहौ मीनस्थे केतावेवंगुणविशिष्टे पुण्यकाल एवं यथादेशं यथाकालं देशकालाद्युल्लिख्य ] प्राचीनावीत्यस्मत्पितुरमुकशर्मणोऽमुकगोत्रस्य वसुरूपस्य सपत्नीकस्य, अस्मत्पितामहस्यामुकशर्मणोऽमुकगोत्रस्य रुद्ररूपस्य सपत्नीकस्य, अस्मत्प्रपितामहस्यामुकशर्मणोऽमुकगोत्रस्याऽऽदित्यरूपस्य सपत्नीकस्य, अस्मन्मातामहस्या० श० गो० व० स० अस्मन्मातुः पितामहस्या० श० गो० रु० स० अस्मन्मातुः प्रपिताम० श० गो० आ० सपत्नीकस्य, अथवाऽस्मत्पितृपितामहप्रपितामहानाममुकशर्मणाममुकगोत्राणां वसुरुद्रादित्यस्वरूपाणां सपत्नीकानामस्मन्मातामहमातुःपितामहमातुःप्रपितामहानाममु० सपत्नीकानामेवमुल्लिख्य, एतेषां तृप्त्यर्थं दर्शश्राद्धं सदैवं सपिण्डं पार्वणेन विधिनाऽन्नेन हविषा श्वः सद्यो वा करिष्य इति संकल्प्य ब्राह्मणान्निमन्त्र्य यज्ञोपवीती प्राङ्मुखोपविष्टस्य विप्रस्य

* मनुसिद्धान्तर्गतग्रन्थ घ पुस्तके नास्ति ।

१ ग पौर्णिमा । २ ग मस्वयेत् । ध° ।

दक्षिणं पादं जानुं वा स्पृष्ट्वाऽस्मत्पितृपितामहप्रपितामहानाममुकशर्म० अस्मन्मातामहमातुःपितामह० सपत्नीकानां दर्शश्राद्धे पुरूरवार्द्रवसंज्ञकविश्वदेवार्थं त्वया क्षणः करणीय इति तं प्रति वदेत्। ॐ तथेति विप्रो यजमानं प्रति वदेत्। एवं द्वितीयस्य। इति विश्वदेवार्थं द्वौ विप्रौ निमन्त्रयेत्। अपि वाऽद्यकरिष्यमाणदर्शश्राद्धे पुरूरवार्द्रव० क्षणः करणीय इति निमन्त्रयेत्। ततः प्राचीनावीत्युदङ्मुखस्य विप्रस्य सव्यं पादं जानुं वा स्पृष्ट्वाऽद्यकरिष्यमाणदर्शश्राद्धेऽस्मत्पितुरमुकशर्म० सपत्नीकस्य स्थाने० करणीय इति तं वदेत्। ॐ तथेति प्रतिवचनम्। एवं पितामहप्रपितामहयोर्मातामहवर्गस्य च, एवमष्टौ ब्राह्मणान्निमन्त्र्य यज्ञोपवीती सर्वान्प्रार्थयेत्। अक्रोधनैः०कारिणा। इति निमन्त्रणानन्तरमृग्वेदिनो विप्रा उपह्वये सु० प्रवोचमित्यृचं पठेयुः। यजुर्वेदिनस्तु आब्रह्मन्ब्राह्मणो० योगक्षेमो नः कल्पतामिति पठेयुः। ततः कर्ता पाकसिद्ध्यनन्तरं निमन्त्रितान्विप्रानाहूय प्रत्युत्थानादिना सत्कृत्य तेषां श्मश्रुकर्मादिस्नानान्तं कारयेत्। ततो मध्याह्ने दर्शश्राद्धाङ्गतर्पणं कुर्यात्। तद्यथा नद्यादौ स्नात्वा तीरं समागत्य वासः परिधाय दर्भासन उपविश्याऽऽचम्य पवित्रपाणिः प्राणानायम्य देशकालौ० प्रा० अद्यकरिष्यमाणदर्शश्राद्धाङ्गत्वेन पितृतर्पणं करिष्य इति सं० सव्यं जान्वाच्य दक्षिणहस्ते दर्भान्निधाय सव्यहस्तेनान्वारब्धेन दक्षिणेन पाणिना पितृतीर्थेनाग्नेय्यभिमुखः शुचिस्थले दर्भानास्तीर्य तेषु तिलैर्मिश्रितजलेन तर्पयेत्। अस्मत्पितरं० शर्माणं० गो० वसुरूपं सपत्नीकं स्वधा नमस्तर्पयामि १ अस्मत्पितामहं० २ अस्मत्प्रपितामहं० ३ अस्मन्मातामहं० ४ अस्मन्मातुः पितामहं० ५ अस्मन्मातुः प्रपितामहं० ६ इति प्रत्येकं मन्त्रावृत्त्या त्रिस्त्रिस्तर्पयित्वाऽनेन पितृतर्पणाख्येन कर्मणा भगवान्पितृरूपी परमेश्वरः प्रीयतामिति कर्मेश्वरार्पणं कृत्वा पुनः स्नानं कृत्वा वस्त्रधारणं विधाय गृहमागत्य कुतपकाले श्राद्धारम्भं कुर्यात्। द्विराचम्य पवित्रवन्तः० प्त्यारभमिति पवित्रे धृत्वा देशकालौ संकीर्त्य प्राचीनावीत्यस्मत्पितुरमुकशर्मणोऽमुकगोत्रस्य वसुरूपस्य सपत्नीकस्येत्यादि मातुःप्रपितामहान्तान्पूर्ववदुच्चार्योपक्रान्तं दर्शश्राद्धं करिष्य इति संकल्पयेत्। कुरुष्वेति प्रतिवचनम्। यज्ञोपवीत्येकस्मिन्पार्श्वे देवार्चनार्थमिमं मे गन्धे०

१ ग त प्रति व°। २ ग °प्रन्थुमार्°। ३ ग °स्नान°। ४ क ख °ना प°। ५ ग स्नात्वा। ६ ग °दारो पृ°। ७ ग °स्य पवृ°।

मयेति मन्त्रेण शुद्धोदकं निक्षिप्य गन्धद्वारां० श्रियमिति गन्धम् । शरासः० लिप्सतेति दर्भमयकूर्चम् । यवोऽसि धान्य० स्मृतमिति यवान् । हिरण्यरूपः० मस्मा इति हिरण्यम् । तूष्णीं पुष्पतुलसीपत्रफलानि निक्षिपेदेतद्यवोदकम् । ततः प्राचीनावीत्यन्यस्मिन्पात्रे पित्रर्चनार्थं तिलोदकं संपादयेत् । तत्र यवावपनस्थाने तिलोऽसि सोमदे० नम इति मन्त्रेण तिलान्निक्षिप्य तुलसीदलैः सह भृङ्गिराजपत्राणि निक्षिपेदिति विशेषः । अन्यत्पूर्ववत् । ततो यज्ञोपवीत्यात्मशुद्ध्यर्थं गृहद्रव्यादिशुद्ध्यर्थं च न तमंहो० शुचीवो० सहस्रशीर्षा० तरत्समन्दी० इत्यादिपवित्रमन्त्रान्ब्राह्मणैः सह पठित्वा शुद्धवतीभिः कूष्माण्डीभिः पावमानीभिस्तरत्समन्दीभिश्च यवोदकमभिमन्त्रयेत् । उपकल्पितान्पदार्थान्यवोदकेन प्रोक्षयेत् । ततो विप्राणामग्रे ब्रह्मदण्डार्थं कुशतिलसहितं हिरण्यं निधाय समस्तसंपत्० पादपङ्कजमित्यन्तं पठित्वा प्रदक्षिणीकृत्य प्राचीना० दर्शश्राद्धं कर्तुं ममाधिकारसंपदस्त्विति भवन्तो ब्रुवन्तु । अस्तु श्राद्धाधिकारसंपदिति प्रतिवचनम् । ततो यज्ञोपवी० विप्रान्निमन्त्रणक्रमेण प्रत्येकं भवतः स्वागतमिति प्रणतिपूर्वकं प्रब्रूयात । सुस्वागतमिति विप्राः । ततः कर्ता पुनर्विप्रान्निमन्त्रयेत् । तद्यथा प्राङ्मुखोपविष्टस्य विप्रस्य दक्षिणं जानुं स्पृष्ट्वा दर्शश्राद्धे पुरूरवार्द्रवसंज्ञकविश्वदेवार्थं त्वया क्षणः करणीयः । ओं तथेति विप्राः । कर्ता प्राप्नोतु भवान् । विप्रः प्राप्नवानि । एवं द्वितीं० ततः प्राची० एवमेवोदङ्मुखानां पित्र्यविप्राणां सव्यजानुस्पर्शपूर्वकं निमन्त्रणं कुर्यात् । ततो यज्ञो० प्राच्यां गृहाङ्गणे देवपाद्यार्थं प्रादेशमात्रमुदक्प्लवं चतुरस्रं गोमयोदकाभ्यां मण्डलमुल्लिख्य तत्र प्रागग्रान्दर्भानास्तीर्य गन्धपुष्पयवैरभ्यर्चयेत् । प्राचीनावीती तद्दक्षिणतः षडङ्गुलान्तरे पूर्ववद्वर्तुलं दक्षिणाप्लवं मण्डलमुल्लिख्य दक्षिणाग्रान्दर्भानास्तीर्य गन्धपुष्पतिलैरभ्यर्चयेत् । यज्ञो०देवमण्डलसमीपे प्रत्यङ्मुख उपविश्य मण्डलात्प्रत्यग्दर्भपीठयोः प्राङ्मुखो देवद्विजावुपविश्य प्रथमविप्रपादौ मण्डले निधाय पुरूरवार्द्रवसंज्ञ० या इदं वः पाद्यं स्वाहा नम इति ग्रन्थिरहितपवित्रकसहितेन पाणिना घृताक्तपादयोर्यवोदकं दत्त्वा शं नो देवी० तु न इति दक्षिणभागस्थितभार्यास्रावितेनान्येन शुद्धोदकेन मण्डले पादौ प्रक्षाल्याभिवन्दयेत् । नात्र विप्र-

---

१ क. ख. °क्षिप्य त° । २ ग. °वावापस्था° । ३ ग. °मिति ताम्रद° । ४ ग. °क्षिणजा° । ५ ग. °देवस्थने स्व° ।

पादाधःक्षालनम् । एवं द्वितीये । ततः प्राचीनावीती दक्षिणमण्डलसमीपे प्राग्दक्षिणामुख उपविश्य मण्डलाद्दक्षिणत उदङ्मुखोपवेशितस्य पितृस्थानीयविप्रस्य पादौ मण्डले निधाय, अस्मत्पितरमुकशर्मन्नमुकगोत्र वसुरूप सपत्नीकेदं ते पाद्यं स्वधा नम इति पूर्ववत्तिलोदकं दत्त्वा शं नो देवीरिति पूर्ववत्प्रक्षाल्याभिवन्दयेत् । एवमितरेषामस्मत्पितामहेत्यादि । यज्ञोपवीती दैविकमण्डलादुत्तरतो ब्राह्मणान्द्विराचाम्य स्वयं पवित्रे त्यक्त्वा पादौ प्रक्षाल्य द्विराचम्यान्ये पवित्रे धारयेत् । आचमनोदकेन पादप्रक्षालनोदकसंसर्गो यथा न भवेत्तथाऽऽचमनं कर्तव्यम् । ततो ब्राह्मणैः सह श्राद्धभूमिमागत्य दैवे प्रागग्रकुशद्वयसहितकम्बलाद्यासनद्वयमुपकल्प्य पित्र्ये दक्षिणाग्रैर्दर्भत्रयसहितान्यासनान्युपकल्पयेत् । ततो वामहस्तेनाऽऽसनं धृत्वा दक्षिणेन ब्राह्मणदक्षिणहस्तं गृहीत्वा भूर्भुवः स्वः समाध्वमित्यासन उपवेशयेत् । एवं मन्त्रावृत्त्या प्राङ्मुखावुदक्संस्थौ वैश्वदेविकविप्रावुपवेश्य प्राचीनावीती पूर्ववदुदङ्मुखान्प्राक्संस्थान्मर्मैते पितर इति ध्यायन्पित्र्यब्राह्मणानुपवेशयेत् । सुसमास्मह इति प्रतिवचनम् । ततः प्रतिविप्रं श्वेतसूत्रवर्तियुक्तमविच्छिन्नं तैलदीपं स्थापयेत् । प्राची० अत्र नीवीबन्धनम् । तद्यथा । उत्तरीयवस्त्राञ्चलदशान्ते कुशतिलसहितं परिहितवस्त्रदक्षिणकटिसंलग्नभागेन संवेष्ट्यावशिष्टोत्तरीयवस्त्रेण कटिभागं वेष्टयेत् । एवं नीवीं बद्ध्वा यज्ञोप० आचम्य देश० प्राचीनावीत्यस्मत्पितुरमुकशर्मण इत्यादिपक्षत्रयान्मातुःप्रपितामहान्तान्पूर्ववदुच्चार्य प्रक्रान्तं दर्शश्राद्धं करिष्य इति संकल्प्य कुरुष्वेत्यभ्यनुज्ञातोऽपहता असु०मन इति नैर्ऋतिकोणमारभ्यापदक्षिणं सर्वतस्तिलानवकीर्योदीरता०हवेष्विति जपित्वा तिला रक्ष० रक्षक इति द्वारदेशे कुशतिलान्प्रक्षिपेत् । यज्ञोप०यवोदकं किंचित्पात्रान्तरे गृहीत्वा तस्मिञ्शुद्धशुद्धं भस्म च प्रक्षिप्य तज्जलेन तद्विष्णो०ततम् । तत्सवि०यादिति मन्त्राभ्यां दर्भैरन्नानि समीक्ष्य विप्रान्प्रति वदेत् । पाकादीनां पवित्रताऽस्त्विति विप्रैः प्रत्युक्तः श्राद्धभूमौ गया०प्रवर्तते । देवताभ्यः पितृभ्यः०नमो नमः इति त्रिर्जपित्वा देवार्चनं कुर्यात् । वैश्वदेविकविप्रहस्तयोरपो दत्त्वा पुरूरवार्द्रव०देवानामिदमासनमित्येकैकस्याऽऽसने दक्षिणतः सयवान्प्रागग्रान्द्वर्भानृजून्दत्त्वाऽपो दद्यात् । स्वासनमिति विप्रः । कर्ता प्रत्येकमासनं

१ ग 'तीयरप । सं° । २ क ख. 'रदमन्त्र भ° । ३ ग 'दद्धरत्र° । ४ क ख. 'दुग्धमें । ५ ग. 'पं मेरपा' । ६ ग 'मेदर । दं° । ७ ग 'मनहृन्दमाँर्द ।

संस्पृश्य, अत्राऽऽस्यतामिति वदेत् । धर्मोऽसीति विप्रः। अत्र यदि ऋग्वेदिनो विप्राः स्युस्तदा, इन्द्रहृद्य०वाशीमन्त०स इपुहस्तैः०इति तिस्र ऋचो जपेयुः । यजुर्वेदिनस्तु स इपुहस्तैः०नमः ककुभाय निपङ्गिणे स्तेनानां पतये नमः । नमो निपङ्गिण इपुधिमते तस्कराणां पतये नमः । इति त्रीन्मन्त्राञ्जपेयुः । ततः प्रत्येकं निरङ्गुष्ठं द्विजदक्षिणहस्तं धृत्वा देवे क्षणः क्रियतामिति वदेत् । ओं तथेति विप्राः । कर्ता प्राप्नोतु भवान् । प्राप्नवानीति विप्राः । ततोऽभ्युक्षितायां भुवि प्रागग्रान्दर्भानास्तीर्य तेपु न्यब्जिलमर्घ्यपात्रमासाद्य प्रोक्ष्योत्तानीकृत्य तस्मिन्प्रागग्रं दर्भद्वयात्मकं पवित्रं निधायाप आसिच्य शं नो देवी०तु न इत्यभिमन्त्र्य यवोऽसि धान्य०स्मृतमिति यवानोप्य गन्धपुष्पतुलसीदलानि च प्रक्षिप्य देवपात्रं संपन्नमित्यभिमृशेत् । सुसंपन्नमिति प्रतिवचनम् । ततो यवानादाय विश्वान्देवानभवत्स्वावाहयिष्यामीत्युक्त्वा ताभ्यामावाहयेत्युक्तौ विप्रदक्षिणजानुनि सव्यहस्तं निधाय विश्वे देवास आगत०पीदतेति विप्रदक्षिणपादादियुग्मक्रमेण पादजान्वंसशिरःसु यवानवकीर्यैवं द्वितीय आवाह्य विश्वे देवाः शृणुते०मादयस्व । आगच्छन्तु महा०भवन्तु ते । इति सक्तुपुरथाय स्वाहार्घ्या इत्युभयोरर्घ्यपात्रं सकृन्निवेदयेत् । सन्त्वर्घ्या इति प्रतिवचनम् । अथ प्रथमब्राह्मणहस्तेऽपो दत्त्वा पवित्रे निधाय हस्तेनैवार्घ्यपात्रादर्घ्यमादाय पुरूरवा०देवा इदं वोऽर्घ्यमिति दत्त्वा स्वर्घ्यमित्युक्ते या दिव्या आपः पृथिवी०भवन्त्विति स्रवन्तीरनुमन्त्र्यापो दद्यात् । एवं द्वितीयब्राह्मणहस्तेऽन्या अपो दत्त्वाऽवशिष्टमर्घ्यं दत्त्वाऽनुमन्त्र्य पुनरपो दद्यात् । तत उभाभ्यामपो दत्त्वा पुरूरव०देवा एप वो गन्धः स्वाहा नमो न मम गन्धद्वारां दुरा०श्रियमिति वा मन्त्रेण पवित्ररहितेन पाणिना प्रत्येकं द्विर्द्विर्गन्धं दत्त्वा पुनरुभाभ्यामपो दद्यात् । एवं सर्वोपचारेष्वाद्यन्तयोरपो दद्यात् । सुगन्ध इति प्रति० । पुरूरवा०देवा इमानि वः पुष्पाणि तुलसीदलसहितानि स्वाहा नमो न मम । आयनेत० इमे । सुपुष्पाणीति प्र० । पुरूरवा० देवा एप वो धूपः स्वाहा न० । धूरसि धूर्व०धूर्वामः । सुधूप इति प्र० । पुरूरवा०देवा एप वो दीपः स्वाहा न० । उद्दीप्यस्व जातवेदो०दिशो दिश । सुदीप० । पुरूर० इदं व आच्छादनं स्वाहा० । युवं वस्त्रा०सचेथे इति वस्त्रद्वयम् ।

---

१ क ख °अद्र°। २ ग °त्यनुम°। ३ ग च क्षिप्त्वा दे°। ४ क ख °मृश्य सु°। ५ ग. °हभय रपा ।

स्वाच्छाद० । युवा सुवा० यन्तः । पुरूरवार्द्रव० देवार्चनविधेः सपूर्णताऽस्त्विति भवन्तो ब्रुवन्त्वित्युक्त्वाऽर्चनविधेः सपूर्णताऽस्त्विति प्रत्युक्तो यस्य स्मृत्येत्युक्त्वा युष्मदनुज्ञया पित्रर्चनं करिष्य इत्युक्त्वा कुरुष्वेति प्रत्युक्तः प्राचीना० पितृब्राह्मणहस्तेऽपो दत्त्वाऽस्मत्पितर० श० गो० व० स० स्वेदमासनमिति विप्रस्याऽऽसने वामभागे सतिलानयुग्मान्दक्षिणाग्रान्द्विगुणान्दर्भान्दत्त्वाऽपो दद्यात् । एवमितरेषां तत्तन्नामगोत्राद्युच्चारपूर्वकमासनानि दद्यात् । स्वासनमिति विप्राः । ततः कर्ता प्रत्येकमासनं सस्पृशन्नत्राऽऽस्यतामित्याह । विप्रा धर्मोऽसीत्युक्त्वेन्द्रहृदयामित्यादिस्वस्वशाखोक्तान्मन्त्रान्पूर्ववज्जपेयुः । कर्ता पित्र्ये क्षणः क्रियतां प्राप्नोतु भवानिति पूर्ववत्कुर्यात् । ततो द्विजाग्रे भुवमभ्युक्ष्य दक्षिणाग्रान्दर्भानास्तीर्य तेषु प्रतिवर्गं त्रीणि त्रीणि न्यग्विलान्याग्नेयीसंस्थान्यर्घ्यपात्राण्यासाद्य प्रोक्ष्योत्तानानि कृत्वा तेषु पदसु प्रत्येकं दर्भत्रयात्मकमाग्नेय्यग्रकं पवित्रं निधायाप आसिच्य शं नो देवीरिति सकृन्मन्त्रेण पात्रस्था अपोऽनुमन्त्र्य तिलोऽसि सोम० नमः इति प्रतिपात्रं मन्त्रावृत्त्या तिलानोप्य गन्धपुष्पादि क्षिप्त्वा पितृपात्रं सपन्नं पितामह० प्रपितामह० मातामह० मातुः पितामह० मातु.प्रपितामह० पन्नमिति यथालिङ्गं क्रमेणाभिमृशेत् । सुसपन्नमिति तत्तत्स्थानीयविप्रो वदेत् । कर्ता तिलानादायास्मत्पितृपिता० नमुकश० गो० व० स० अस्मन्मातामह० श० गो० व० सपत्नीकान्भवत्स्वावाहयिष्यामीत्युक्त्वा तैरावाहयेत्युक्त० उशन्तस्त्वा० अत्तव । अस्मत्पितरम० सपत्नीकमावाहयामीति विप्रवामाङ्गादिषु युग्मक्रमेण शिरस्यसयोर्जान्वोः पादयोश्च तिलान्विकिरेत् । एवं पितामहादीनुशन्तस्त्वेतिमन्त्रावृत्त्या नामगोत्राद्युच्चारपूर्वकं तत्तद्विप्र आवाह्य, आयन्तु नः पि० स्मान् इति सकृदुपतिष्ठेत । यज्ञोपवी० अर्घ्यपात्राणि तत्तद्ब्राह्मणाग्रे निधाय स्वधाऽर्घ्या इति मन्त्रावृत्त्या प्रत्येकं निवेदयेत् । सन्त्वर्घ्या इति प्र० । तत. पितृविप्रहस्ते तिलोदकं दत्त्वा पित्रर्घ्यपात्रात्सशेषमर्घ्यमादाय विप्रहस्ते पवित्रं निधाय सव्यहस्तेनान्वारब्धेन दक्षिणेन पाणिना सपत्नीक पितरिदं तऽर्घ्यमिति विप्रहस्ते दत्त्वा स्वर्घ्यमिति प्रत्युक्ते, या दिव्या आपः० भवन्तु । इति विप्रहस्तात्भूमौ स्रवन्तीरपोऽनुमन्त्र्य तिलोदकं दद्यात् । एवं पितामहादिभ्यस्तत्तदर्घ्यपात्रात्तत्तद्ब्राह्मणहस्ते दद्यात् ।

१ क ख 'न्तानवकि'।

तत्र[1] मन्त्रः—सपत्नीक पितामहेदं तेऽर्घ्यम् । सपत्नीकप्रपि० । सपत्नीक मातामहेदं० । स० मातुःपिताम० । स० मातुःप्रपितामह० र्घ्यमन्यत्समानम् । ततः पितृपात्रे सर्वपित्र्यविप्रहस्तस्थितकुशान्निधाय प्रपितामहपात्रशेषं पितामहपात्रे निक्षिप्य तत्पितृपात्रे समवनीय मातुःप्रपितामहादिपात्रसंस्रवानपि पितृपात्रे समवनीय ताभिरद्भिः पुत्रकामो मुखमनक्ति अपः स्पृष्ट्वा पित्र्यविप्रवामभागे शुचौ देशेऽर्घ्यपात्राधः स्थितांस्तिलसहितान्दर्भानास्तीर्य तेषु पितृभ्यः स्थानमसीति प्रथममर्घ्यपात्रं निधाय गन्धादिभिस्तदभ्यर्च्य प्रपितामहपात्रेणापिदध्यात् । तदक्षय्यवचनान्तं न चालयेत् । ततः प्राची० ब्राह्मणहस्तेष्वपो दत्त्वाऽस्मत्पितः० सपत्नीक एष ते गन्धः स्वधा नमो न मम । एवं पितामहादितत्तन्नामोच्चारपूर्वकं त्रिस्त्रिर्गन्धं दत्त्वाऽपो दद्यात् । एवं देवार्चनोक्तप्रकारेणाऽऽच्छादनान्तां पूजां समाप्येदं पितृभ्य० विष्णु । इति नमस्कृत्यार्चनविधेः संपूर्णतां वाचयित्वा यज्ञोपवीत्याचम्य विप्राणां पुरतोऽर्चनकाले पतितगन्धपुष्पदर्भाद्यपनीय भूमिं संमृज्य युष्मदनुज्ञया भोजनपात्राण्यासादयिष्य इत्युक्त्वाऽऽसादयेत्यनुज्ञातो भोजनस्थाने प्रतिविप्रं दैवे नैर्ऋतीमारभ्य प्रदक्षिणमी(मै)शान्यन्तं पुनर्नैर्ऋत्यादी(द्यै)शान्यन्तं पात्रप्रमाणं चतुरस्रमण्डलं गोमयोदकाभ्यां कृत्वा प्राची० पित्र्य ई(ऐ)शानीमारभ्या[3]प्रदक्षिणं नैर्ऋत्यन्तं पुनरैशान्यादिनैर्ऋत्यन्तं वर्तुलं मण्डलं कृत्वा दैवे सयवान्पित्र्ये सतिलान्दर्भान्प्रास्य भोजनपात्राणि संस्थाप्य प्राची० पितृपात्राणां समन्ततो भस्ममर्यादां कुर्यात् । पिशङ्गभृष्टिम० हय । यज्ञो० देवपात्रयोः परितः—रक्षा णो अग्ने० धानम् । ब्रह्म च ते० च्छन् । इति भस्ममर्यादां कृत्वा प्राची० पितृविप्राणां हस्तशुद्धिं विधाय यज्ञो० देवविप्रयोर्हस्तशुद्धिं विधाय भोजनपात्राणि प्रक्षाल्य हस्तप्रक्षालनजलं जलपात्रप्रक्षालनजलं च शुचौ देशे तत्तत्पात्रमण्डले वा क्षिपेत् । ततः पाणिहोमः । घृताक्तमन्नमादाय पितृब्राह्मणसमीप उपविश्य प्राची० ब्राह्मणपाणिषु प्राग्दक्षिणाग्रान्दर्भानन्तर्धाय स्वदक्षिणहस्तं सदर्भेण वामहस्तेनोपस्तीर्यान्नं द्वेधा विभज्योत्तरभागस्य मध्यात्पूर्वार्धाच्चावदाय पश्चात्त्वी तु तृतीयं पश्चार्धाद्यवदाय पात्रस्थमवत्तं चाभिघार्य सोमाय पितृमते स्वधा नम इति पितृतीर्थेन विप्रदक्षिणपाणौ हुत्वा सोमाय० न ममेति त्यजेत् । पुनः

१ क. ख. °त्र स° । २ ग. °रघ्न म° । ३ ग. °रभ्य प्र° । ४ ग हुत्वा । ५ ग. वामेनो° ।

पूर्ववद्दक्षिणभागादवदायाग्नये कव्यवाहनाय स्वधा नम इति द्वितीयामाहुतिं हुत्वाऽग्नये कव्य० न ममेति त्यजेत् । एवं सर्वेषु पित्र्यविप्रपाणिषु जुहुयात् । ब्राह्मणाः स्वस्वपाणिस्थमन्नं स्वस्वपात्रे संस्थाप्य बहिर्गत्वाऽऽचम्य यथास्थानमुपविशेयुः । ततः कर्ता यज्ञोपवी० मूर्धानं दि० आमासु प० इति देवपूर्वं पात्राण्याज्येनोपस्तीर्य देवपूर्वमन्नानि परिवेष्य प्राची० पाणिहुतशेषमन्नं किंचित्पिण्डार्थमवशेष्यावशिष्टं पितृपात्रेषु तूष्णीं दत्त्वा यज्ञो० देवपात्रस्थमन्नं सावित्र्याऽभ्युक्ष्य तूष्णीं परिषिच्योपरि स्थितेन न्यङ्मुखेन दक्षिणेन पाणिनाऽधःस्थितेनोत्तानेन च सव्यपाणिना स्वस्तिकाकृतिना पात्रमालभ्य पृथिवी ते पात्रं द्यौरपिधानं ब्रह्मणस्त्वा मुखेऽमृतेऽमृत जुहोमि ब्राह्मणानां त्वा विद्यावतां प्राणापानयोर्जुहोम्यक्षितमसि मैषां क्षेष्ठा अमुत्रामुष्मिँल्लोक इत्यभिमन्त्र्येदं विष्णु० सुर इत्यृचं पञ्चर्चं वोक्त्वा विष्णो हव्यं रक्षस्वेति न्युब्जेन स्वदक्षिणेन पाणिना ब्राह्मणपाण्यङ्गुष्ठमन्नमन्ने निवेश्य सव्येन पाणिना पात्रमालभ्य दक्षिणेन यवोदकमादाय पुरूरवा० विश्वे देवा देवता इदमन्नं हविरयं ब्राह्मण आहवनीयार्थ इयं भूमिर्गयाऽयं भोक्ता गदाधर इदमन्न ब्रह्मणे दत्तं सुवर्णपात्रस्थमक्षय्यवटच्छायेयम् । पुरूरवा०देवेभ्य इदमन्नममृतरूपं परिविष्टं परिवेक्ष्यमाणं चाऽऽतृप्तेः स्वाहा हव्यं न ममेति पात्रवामभागे भूमावेव जलं निक्षिपेत् । एवं द्वितीयस्यान्न निवेद्य ये देवासो० ध्वम् । इति सकृदुपतिष्ठेत । ततः पितृपात्रस्थमन्नं सावित्र्याऽभ्युक्ष्य तूष्णीं परिषिच्य प्राची० अधस्थितेनोत्तानेन दक्षिणेन हस्तेनोपरि स्थितेनाधोमुखेन सव्येन पाणिना स्वस्तिकाकृतिना पात्रमालभ्य पृथिवी ते पात्र० अमुत्रामुष्मिँल्लोक इत्यभिमन्त्र्य, इदं विष्णुर्विच० विष्णो कव्यं रक्षस्व इति स्वदक्षिणेन न्युब्जेन पाणिना विप्राङ्गुष्ठमन्नमन्ने निवेश्य तिलोदकमादाय पिताऽमुकशर्माऽमुकगोत्रो वसुरूपः सपत्नीको देवतेदमन्नं हविरयं०दत्तं रजतपात्रस्थमक्षय्यवटच्छायेयम् । अस्मत्पित्रे० कायेदमन्नं० आ तृप्तेः स्वधा कव्यं नमो न ममेति दक्षिणभागे जलं क्षिपेत् । एवमितरेभ्यस्तत्तदुच्चारपूर्वकमन्नं निवेद्य ये चेह० जुषस्व । इति सकृदुपतिष्ठेत । श्राद्धमच्छिद्रमस्त्विति भवन्तो ब्रुवन्तु इति विप्रान्संप्रार्थ्याच्छिद्रमस्त्विति तैः प्रत्युक्तेऽन्नेषु मधु सर्पि-

---

१ ग °न ब्राह्म। २ ग °सि मा मैं°। ३ ग अना°। ४ ग °ति स्वदक्षिणेन न्युब्जेन पा°। ५ ग. °व्यथा°। ६ क ख °व्यं नमो न म°। ७ ग °ल क्षि°। ८ ग °क्षिण भा°।

याऽऽसिच्य, ॐ भूर्भुवः स्वः । तत्सवितुर्व० यात् । इति सप्रणवव्याहृतिकां सावित्रीं जपित्वा मधु वाता ऋतायते म० ॥ ३ ॥ इति मधुमतीश्च जपित्वा मधु मधु मधु इत्युक्त्वा देवताभ्यः पितृ० नमो नमः । इति त्रिः ।

सप्त व्याधा दशार्णेषु मृगाः कालञ्जने गिरौ ।
चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे ॥
तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः ।
प्रस्थिता दीर्घमध्वानं यूयं तेभ्योऽव(किमत)सीदथ ॥
अमूर्तानां च मूर्तानां पितॄणां दीप्ततेजसाम् ।
नमस्यामि सदा तेषां ध्यायिनां योगचक्षुषाम् ॥

इति पितॄननुस्मृत्य, ईशानविष्णुक० ब्रह्मार्पणं ब्रह्म० धिना । हरिर्दाता० चतुर्भिश्च० प्रसीदतु । ॐ तत्सद्ब्रह्मार्प० । एको विष्णुर्म० व्ययः । अनेन मम पित्रादीनां दर्शश्राद्धे ब्राह्मणभोजनेन पितृस्वरूपी जनार्दनवासुदेवः प्रियतां न ममेति । यज्ञो० पितृपूर्वकं विप्रपाणिष्वापोशनार्थमुदकं दद्यात् । विप्राश्च नित्यभोजनवत्परिषेचनं कृत्वा बलिदानवर्जममृतोपस्तरणमसीत्यापोशनं कृत्वा प्राणाहुतीर्गृह्णीयुः । कर्ता च प्राणाहुतिमन्त्रान्पठेत् । श्रद्धायां प्राणे निविष्टोऽमृतं जुहोमि शिवो मा विशाप्रदाहाय प्राणाय स्वाहा । श्रद्धायामपाने नि० शि० अपानाय स्वाहा । श्रद्धायां व्याने नि० व्यानाय स्वाहा । श्रद्धायामुदाने नि० उदानाय स्वाहा । श्रद्धायाꣳ समाने नि० समानाय स्वाहा । ब्रह्मणे स्वाहा । प्राणाय स्वाहा । अपानाय स्वाहेत्येवं वा । ततो विप्रा वाङ्नियमाद्युक्तनियमयुक्ताः सन्तो भुञ्जीरन् । कर्ता अपेक्षित० मानसैरिति विप्रान्संप्रार्थ्य यथासुखं जुषध्वमिति भोजनायातिसृजेत् । ततः सव्याहृतिकां गायत्रीं जपित्वा भुञ्जानान्विश्वदेवराक्षोघ्नपित्र्यादीनि सूक्तानि श्रावयेत् । ततस्तेषु तृप्तेषु सिद्धस्य हविषो मध्ये यद्रोचते तद्वाचध्वमिति पृच्छेत् । अलमित्युक्ते पुरू० देवास्तृप्ताः स्थ प्राची०

---

१ ग °लाञ्जिरे गि° । २ ग. °का मरोद्वी° । ३ ग. °सि सकल्पश्च च° । ४ क ख. °हा । प्राणायेद° । श्र° । ५ क. ख. °हा । अपानायेद° । श्र° । ६ क. ख. °हा । व्यानायेदं० । श्र° । ७ क. ख. °हा । उदानायेद० । श्र° । ८ क ख °हा । समानायेदं० । श्र° । ९ क ख. °हा । ब्रह्मण इद० । अपा° ।

पितरस्तृप्ताः स्थेति वदेत् । तृप्ताः स्म इति प्र० । पूर्ववद्गायत्रीं जपित्वा मधुवाता० ऋचः ३ । अक्षन्नमी० हरी । इति श्रावयित्वा श्राद्धं संपन्नमिति वदेत् । सुसंपन्नमिति विप्राः । ततः कर्ता भुक्तशेषात्सार्ववर्णिकमन्नं पिण्डार्थं प्रकिरणार्थं च पृथक्पृथगुद्धृत्य शेषं ब्राह्मणेभ्यो निवेद्य शेषमन्नं किं क्रियतामिति । विप्रास्तदन्नं स्वी कुर्युरिच्छा चेत् । नो चेदिष्टैः सह भुञ्जीतेति वदेयुः । ततः कर्तोच्छिष्टभागेभ्योऽन्नं दीयतामिति वदेत् । ब्राह्मणा भुक्तावशिष्टं पात्रस्थमन्नं यजमानकुले० भूतल इति मन्त्रेण दर्भे दक्षिणभागे पित्र्ये वामभागे भूमौ त्यजेयुः । ततः कर्ता पिण्डदानं कुर्यात् । तद्यथा पितृतृप्त्यर्थं पिण्डदानं करिष्ये । कुरुष्वेति विप्रैरुक्ते यज्ञोपवीती द्विजोच्छिष्टसमीपे चतुर्हस्तान्तरे स्थलसंकोचादौ हस्तमात्रान्तरे वा दक्षिणेन हस्तेन स्फ्येन दर्भमूलेन वाऽऽग्नेयीसंस्थां लेखामुल्लिखेत् । अपहता असुरा रक्षांसि वेदिषदः । तत्पश्चात्तथैव द्वितीयामुल्लिख्य क्रमेणाभ्युक्ष्य तयोः क्रमेणाऽऽग्नेय्यग्रकं सकृदाच्छिन्नं बर्हिर्द्वयमास्तीर्य प्राची० प्रथमलेखायां स्तीर्णे बर्हिषि आदिमध्यान्तदेशेषु त्रिरुदकं निनयेत् । शुन्धन्तां सपत्नीकाः पितरः ॥ १ ॥ शुन्धन्तां सपत्नीकाः पितामहाः ॥ २ ॥ शुन्धन्तां सपत्नीकाः प्रपितामहाः ॥ ३ ॥ तथैव द्वितीयलेखायाम् । शुन्धन्तां सपत्नीका मातामहाः ॥ १ ॥ शुन्धन्तां सपत्नीका मातुःपितामहाः ॥ २ ॥ शुन्धन्तां सपत्नीका मातुःप्रपितामहाः ॥ ३ ॥ इति । ततः पाणिहुतशेषमन्नं भुक्तशेषादुद्धृतं सार्ववर्णिकमन्नं च घृतमधुतिलैः संमिश्र्य षट् पिण्डान्कृत्वा पूर्वस्यां लेखायामाग्नेयीसंस्थान्पितृतीर्थेन त्रीन्पिण्डान्दद्यात् । एतत्तेऽस्मत्पितरमुकशर्मन्नमुकगोत्र वसुरूप सपत्नीक ये च त्वामत्रानु तेभ्यश्च गयायां दत्तमस्तु । एवं पितामहप्रपितामहयोः । एवमेव पश्चिमलेखायां मातामहादित्रयाणामपि । ततो बर्हिर्मूले हस्तसंलग्नं लेपं तूष्णीं निमृज्यात् । ततः, अत्र पितरो मादयध्वं यथाभागमावृषायध्वम् । इति सकृत्पिण्डाननुमन्त्र्य सव्येन पार्श्वेन व्यावृत्योदङ्मुखो भूत्वा यथाशक्ति प्राणान्नियम्य पुनरभिपर्यावृत्यामीमदन्त पितरो यथाभागमावृषायीषतेति पुनः पिण्डाननुमन्त्र्य यज्ञोपवीती पिण्डावशिष्टं ग्रासमात्रमन्नमादाय बहिर्निष्क्रम्य तदन्नमाय पवित्रे त्यक्त्वाऽऽचम्यान्ये पवित्रे धृत्वा प्राचीनावीती पूर्ववत्पिण्डेषु तिलोदकं निनयेत् । शुन्धन्तां

१ क ख °तां श्राद्धभु° । २ ग °वेदयेत् । वै° । ३ ग लग्नले° ।

सपत्नीकाः पितर इत्यादि। ततो द्विराचम्य पूर्ववद्धनीवीं विस्रस्य प्रतिपिण्डं तैलाभ्यञ्जनं दर्भैर्दद्यात् । पितरमुकशर्मन्नमुकगोत्र वसुरूप सपत्नीकाभ्यङ्क्ष्व । एवमितरेषु तथैवाञ्जनं दद्यात्। पितरमुकशर्मन्० सपत्नीकाङ्क्ष्वेत्यादि । अथ पिण्डेषु एतद्वः पितरो वासो मानोतोऽन्यत्पितरो युङ्ध्वमिति प्रतिपार्वणं मन्त्रावृत्त्या वासस्थाने दशामूर्णास्तुकां वा पञ्चाशद्वर्षाधिकं वयश्चेत्स्वप्रकोष्ठहृदयान्यतरस्थं लोम दद्यात्पूर्वोक्तेनैव मन्त्रेण । ततः सव्येनापसव्येन वा पिण्डान्गन्धाद्युपचारैरभ्यर्च्य प्राचीनावीती, अथैनानुपतिष्ठेत नमो वः पितर इषे० इह सन्तः स्याम। मनोन्वाहुवामहे० न्मभिः । आ त एतु मनः पुनः० दृशे । पुनर्नः पि० चेमहि । *अथ पिण्डस्थान्पितॄन्प्रवाहयामीति* ध्यायन्सकृदुत्तानेन हस्तेन पिण्डांश्चालयेत्।परेतन पितरः सो० नियच्छत। ततः सकुटुम्बः पिण्डान्नमस्कृत्य वीरं मे दत्त पितर इति मन्त्रेण मध्यमं पितामहपिण्डमादाय पुनस्तेनैव मन्त्रेण मातुःपितामहपिण्डमादाय पत्न्यै पुत्रकामायै प्रयच्छेत्। सा च० आधत्त पितरो गर्भं कुमारं पुष्करस्रजम्। यथाऽयं मरपा असत्। इति मन्त्रं स्वयं सकृत्पठन्ती पिण्डद्वयं प्राश्नीयात्। अनेकपत्नीपक्षे तावेव पिण्डौ दर्भैर्विभज्य यथांशं मन्त्रपूर्वकं सर्वा अपि प्राश्नीयुः । पत्न्यामनधिकारिण्यामादानप्राशनमन्त्रयोर्लोप एव । ततः *पिण्डानुद्वासयिष्य इत्युक्त्वा ब्राह्मणैरुद्वासयेत्यनुज्ञातोऽवशिष्टान्पिण्डा*-नप्स्वग्नौ वा क्षिपेत् । ततो यज्ञोपवीती विप्राणां पितृपूर्वकमुत्तरापोशनार्थमुदकं दद्यात । विप्रा अमृतापिधानमसीत्युत्तरापोशनं कृत्वाऽवशिष्टजलं बहिर्निनयेयुः ।

> रौरवे पूयनिलये पद्मार्बुदनिवासिनाम् ।
> अर्थिनामुदकं दत्तमक्षय्यमुपतिष्ठतु ॥

ततो धृतपवित्रग्रन्थीं विस्रस्योच्छिष्टमण्डले निक्षिपेयुः । कर्ता ब्राह्मणानां पितृपूर्वकं गण्डूषकरणहस्तप्रक्षालनादिशुद्धा(द्धया)चमनान्तं कारयित्वा विकिरं दद्यात्। आचान्तेषु विप्रेषु पिण्डदानमिति पक्षे विप्राणामुत्तरापोशनादिशुद्धा(द्धया)चमनान्तं कारयित्वा पिण्डदानं कृत्वा विकिरं दद्यात्। पक्षद्वयेऽपि पिण्डदानान्ते विकिरदानम्। तद्यथा—पूर्वोद्धृतं सघृतमन्नमादाय प्रथमवैश्वदेविकाद्विजोच्छिष्टान्ते—

> असोमपाश्च ये देवा यज्ञभागविवर्जिताः ।
> तेषामन्नं प्रदास्यामि विकिरं वैश्वदेविकम् ॥

इति यवोदकसहितं सक्तुप्रकीर्य प्राचीनावीती प्रथमपित्र्यविप्रोच्छिष्टान्ते—

असंस्कृतप्रमीता ये त्यागिन्यो याः कुलस्त्रियः ।
दास्यामि तेभ्यो विकिरमन्नं ताभ्यश्च पैतृकम् ॥

इति तिलोदकसहितं सक्तुप्रकीर्य तत्समीपे दक्षिणाग्रान्दर्भानास्तीर्य तेषु ये अग्निदग्धा० कल्पयस्व । इति शेषमन्नं प्रकीर्य तदुपरि तिलोदकं निनयेत् ।

अग्निदग्धाः कुले जाता येऽप्यदग्धाः कुले मम ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥

ततो यज्ञोपवीत्याचम्य पवित्रे त्यक्त्वाऽन्ये धारयेत् । ततो वैश्वदेविकविप्रहस्तयोरपो दर्भांश्च दद्यात् । शिवा आपः सन्तु । अथ गन्धपुष्पाणि । सौमनस्यमस्तु । अथ यवाः । यवाः पान्तु । पुनरपो दद्यात् । दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिश्चास्तु । सन्तु शिवा आपः । अस्तु सौमनस्यम् । पान्तु यवाः । अस्तु दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिश्चेति क्रमेण प्रतिवचनानि । एवमपसव्येन पित्र्यविप्रहस्तेषु । तत्र यवस्थाने तिलाः, तिलाः पान्त्विति। शेषं समानम् । ततः पित्र्यविप्रान्प्रति वदेत् । अघोराः पितरः सन्तु । सन्त्वघोराः पितर इति विप्राः । ततः कर्ता यज्ञोपवीती ब्राह्मणानभिवाद्य गोत्रवृद्धिं याचेत । अस्मद्गोत्रं वर्धताम् । युष्मद्गोत्रं वर्धतामिति प्रतिवचनम् । ततः—

नित्यानुष्ठानसिद्ध्यर्थं सर्वदाऽप्यात्मशुद्धये ।
पितृमातृपराः सन्तः सन्त्वस्मत्कुलजा नराः ॥

इतिमन्त्रेण स्वमस्तके चन्दनादिना तिर्यक्तिलकं कृत्वा शिष्यादिना विप्रोच्छिष्टपात्राणि चालयित्वा देवविप्रहस्तयोर्हस्तेनैव यवोदकं दद्यात्। पुरूरवार्द्रवसंज्ञकविश्वेभ्यो देवेभ्यः स्वस्तीति ब्रूत । ततः पित्र्यविप्रहस्तेषु तिलोदकं दद्यात् । पितृपितामहप्रपितामहेभ्योऽमुकशर्मभ्यः, मातामहमातुःपितामहमातुःप्रपितामहेभ्योऽमु०स्वस्तीति ब्रूत । विप्रैः स्वस्तीति प्रत्युक्ते पुनर्देवविप्रहस्तयोर्हस्तेनैव यवोदकं दद्यात् । पुरूरवार्द्रवसंज्ञकानां विश्वेषां देवानां यद्दत्तं श्राद्धं तदक्षय्यमस्त्विति ब्रूत। [ अस्त्वक्षय्यमिति प्रतिवचनम् । ]प्राचीनावीती, अस्मत्पितृपितामहप्रपितामहानामित्यादि मातुःप्रपितामहान्तमुच्चार्य यद्दत्तं श्राद्धं तदक्षय्यमस्त्विति ब्रूतेति पित्र्य-

---

१ क. ख. 'मत्प्र°' ।

विप्राणां तिलोदकं दद्यात्। अस्त्वक्षय्यमिति प्रतिवचनम्। तत आसादितमर्घ्यपात्रं चालयेत्। यज्ञोपवीती ब्राह्मणेभ्यस्ताम्बूलादि दत्त्वा दक्षिणां दद्यात्। अस्मत्पितृस्थानोपविष्टाय ब्राह्मणायेदं रजतं दक्षिणात्वेन तुभ्यमहं संप्रददे। एवं पितामहादिस्थानोपविष्टेभ्यो दत्त्वा पुरूरवार्द्रवसंज्ञकविश्वदेवस्थानोपविष्टाय ब्राह्मणायेदं सुवर्णं दक्षिणात्वेन तुभ्यमहं संप्रददे। एवं द्वितीयाय। ततः सर्वान्प्रार्थयेत्। दक्षिणाः पान्त्विति भवन्तो ब्रुवन्तु। पान्तु दक्षिणा इति प्रतिवचनम्। ततः सति विभवे नानालंकारादि दद्यात्। प्राचीनावीती स्वधां वाचयिष्य इत्युक्त्वा वाच्यतामिति विप्रैः प्रत्युक्तः, अस्मत्पितृपितामहप्रपितामहेभ्योऽमुकशर्मभ्य इत्यादिमातुःप्रपितामहान्तमुच्चार्य स्वधोच्यतामिति पित्र्यविप्रान्प्रति वदेत्। अस्तु स्वधेति विप्राः। कर्ता स्वधा संपद्यतामिति भवन्तो ब्रुवन्तु। संपद्यतां स्वधेति विप्राः। कर्ता यज्ञोपवीती विश्वे देवाः प्रीयन्तामिति भवन्तो ब्रुवन्तु। प्रीयन्तां विश्वे देवा इति प्रतिवचनम्। प्राचीनावीती पितरः प्रीयन्तामिति भवन्तो ब्रुवन्तु। प्रीयन्तां पितर इति प्रतिवचनम्। शोभनं हविरिति कर्तारं प्रति विप्रा वदेयुः। कर्ता यज्ञोपवीती देवताभ्यः पितृ० नम इति त्रिरुक्त्वा वाजे वाजे०देवयानैः। उत्तिष्ठत पितरो विश्वैर्देवैः सहेति विप्रान्दर्भाग्रैः संस्पृशन् ॐ स्वधोच्यतामिति अस्तु स्वधेति वोक्त्वा पितृपूर्वं विसृजेत्। ते च ॐ स्वधा, अस्तु स्वधेति वा ब्रुवन्त उत्तिष्ठेयुः। ततः कया नश्चित्र इति तृचं स्वस्वशाखोक्तं जपेयुः। कर्ता पिण्डनिपरणदेशं गोमयादिना संमृज्य तिलाक्षतान्प्रास्य शान्तिः पुष्टिस्तुष्टिश्चास्त्विति भवन्तो ब्रुवन्तु इत्युदकधारां कुर्यात्। अस्तु शान्तिः पुष्टिस्तुष्टिश्चेति विप्राः। ततः कर्ता पादप्रक्षालनमण्डलदेशे विप्रानुपवेश्य, आमावाजस्य० गम्यात्। इति प्रदक्षिणीकृत्य तेषां हस्तेष्वक्षतपुष्पादि दत्त्वा नियतो वाग्यतः शुचिर्दक्षिणामुखः प्राञ्जलिस्तिष्ठन्वरान्याचेत। दातारो नोऽभिवर्धन्ताम्। दातारो वोऽभिवर्धन्तामिति विप्रैः प्रतिवचनं कार्यम्। एवमुत्तरत्र। कर्ता वेदाः संततिरेव नः। विप्रा वेदाः संततिरेव वः। कर्ता श्रद्धा च नो मा व्यगमत्। विप्राः श्रद्धा च वो मा व्यगमत्। कर्ता बहु देयं च नोऽस्तु। विप्रा बहु देयं च वोऽस्तु। कर्ता, अन्नं च नो बहु भवेत्। विप्रा अन्नं च वो बहु भवेत्। कर्ता, अतिथींश्च लभेमहि। विप्राः, अतिथींश्च लभध्वम्। कर्ता याचितारश्च नः सन्तु। विप्रा याचितारश्च वः सन्तु। कर्ता मा च याचिष्म कंचन। विप्रा मा च याचिढ्वं कंचन। स्वादुषंसदः पितरो०

चित्रसेना० ब्राह्मणासः० पूषा नः पातु० इहैवस्तं मा वि० क्रीळन्तौ पु० गृहे ।

आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ।
प्रयच्छन्तु तथा राज्यं प्रीता नृणां पितामहाः ॥

एताः सत्या आशिषः सन्तु इत्याशिषो दद्युः । कर्ता विप्रदत्ताक्षतादि शिरसि धृत्वा विप्रान्पादाभ्यङ्गादिभिः प्रियोक्तिभिश्च परितोष्य प्रणिपत्य प्रार्थयेत् ।

अद्य मे सफलं जन्म भवत्पादाब्जवन्दनात् ।
अद्य मे वंशजाः सर्वे याता वोऽनुग्रहाद्दिवम् ॥
पत्रशाकादिदानेन क्लेशिता यूयमीदृशाः ।
तत्क्लेशजातं चित्ते तु विस्मृत्य क्षन्तुमर्हथ ॥
यस्य स्मृत्या च नामोक्त्या० च्युतम् ।
मन्त्रहीनं क्रियाहीनं भक्तिहीनं द्विजोत्तमाः ।
श्राद्धं संपूर्णतां यातु प्रसादाद्भवतां मम ॥
यः कश्चिच्छ्राद्धयज्ञस्य प्रोक्तो मन्वादिभिर्विधिः ।
असौ युष्मत्प्रसादेन संपूर्णः सकलोऽस्तु मे ॥

सर्वं संपूर्णमस्त्विति विप्राः । कर्ता वसिष्ठासः पितृ० प्रीता इव ज्ञा० देवान्वसि०ते नो रासन्ता०सदा नः । इदं पितृभ्यो नमो अस्त्वद्येति नमस्कारवतीमन्ततः शंसति तस्मादन्ततः पितृभ्यो नमस्क्रियते तद्वाहुर्व्याहावं पित्र्याः शंसेत् । अव्याहावाँ इति व्याहावमेव शंसेदसंस्थितं वै पितृयज्ञस्य साध्वसंस्थितं वा एष पितृयज्ञं संस्थापयति यो व्याहावं शंसति तस्माद्व्याहावमेव शंस्तव्यमिति पठित्या—

जपच्छिद्रं तपश्छिद्रं यच्छिद्रं श्राद्धकर्मणि ।
सर्वं भवतु मेऽच्छिद्रं ब्राह्मणानां प्रसादतः ॥

इति विप्रान्संप्रार्थयेत् । सर्वमच्छिद्रमस्त्विति विप्रा वदेयुः । कर्ता, अनेन दर्शश्राद्धयज्ञेन भगवान्पितृस्वरूपी जनार्दनवासुदेवः प्रीयताम् । तत्सद्ब्रह्मार्पणमस्तु । वषट् ते विष्णो० सदा नः । ततः प्राचीनावीती सपरिवारो ब्राह्मणैः सहाष्टौ पदान्यनुव्रज्य यज्ञोपवीती पूर्वं प्रतिब्राह्मणं स्थापितदीपान्निर्वास्य पवित्रादीनि विसृज्य पादौ प्रक्षाल्य द्विराचामेत् ।

---

१ ग °पूर्णस । २ ग °पी परमेश्वरः प्री°।

ततो विप्रोच्छिष्टानि भूमौ शुचौ देशेऽवटं खात्वा तत्र निक्षिप्य मृदाऽऽच्छादयेत्। गृहान्तरसत्त्वे सूर्यास्तादनन्तरमुच्छिष्टप्रतिपत्तिः। ततोऽगारं गोमयेनोपलिप्य श्राद्धशेषेण नित्यश्राद्धं कृत्वा श्राद्धशेषेणैव वैश्वदेवादिकं कृत्वेष्टैः सह भुञ्जीतेति। दर्शश्राद्धमनुपनीतोऽपि कुर्यादिति निर्णयसिन्धावुक्तम्। अमाश्राद्धातिक्रमे प्रायश्चित्तमुक्तमृग्विधाने—

न्यूषु वाचं जपेन्मन्त्रं शतवारं तु तद्दिने।
अमाश्राद्धं यदा नास्ति तदा संपूर्णमेति तत्॥ इति।

इति श्रीमच्चित्तपावनकेळकरोपाभिधमहादेवात्मजबापूभट्टविरचितायां श्राद्धमञ्जर्यां सकलशिष्टवर्यपरिगृहीतः पार्वणश्राद्धप्रयोगः।

अथ गृह्यपरिशिष्टोक्तो दर्शश्राद्धप्रयोगः। अत्र श्राद्धार्हदेशपदार्थोपकल्पनादि सर्वे धर्माः परिभाषोक्ता एव ग्राह्याः। श्राद्धकर्ता श्राद्धदिने वा प्रातः श्राद्धार्हान्ब्राह्मणान्द्वौ दैवे पित्र्ये त्रीनेकैकं वोभयत्र शक्तश्चेदेकैकस्य स्थानेऽनेकान्वा निमन्त्रयेत्। श्वोऽद्य वा करिष्यमाणदर्शश्राद्धे पुरूरवार्द्रवसंज्ञकविश्वदेवस्थाने त्वया क्षणः करणीयः। ॐ तथेति प्रतिवचनम्। प्राचीनावीती, अद्यकरिष्यमाणदर्शश्राद्धेऽस्मत्पितुरमुकशर्मणोऽमुकगोत्रस्य वसुरूपस्य सपत्नीकस्य स्थाने त्वया क्षणः करणीयः। ॐ तथा। एवं पितामहप्रपितामहयोर्मातामहादीनां च विप्रपादस्पर्शपूर्वकं निमन्त्र्य मध्याह्ने स्नात्वा पूर्वोक्तप्रकारेण दर्शश्राद्धाङ्गं तर्पणं विधाय ब्राह्मणान्समाहूय तान्प्रति सव्येनैव स्वागतमिति प्रणतिपूर्वकं वदेत्। सुस्वागतमिति प्रतिवचनम्। ततः प्राच्यां शुचौ गृहाङ्गणे गोमयोदकाभ्यां चतुरस्रं मण्डलमुल्लिख्य तद्दक्षिणतस्तथैव वर्तुलमण्डलमुल्लिख्योत्तरे सयवान्दर्भानास्तीर्य दक्षिणे सतिलान्दर्भानास्तीर्य गन्धादिभिर्मण्डलद्वयमभ्यर्च्योत्तरमण्डलस्य पश्चात्प्राङ्मुखौ दैविकविप्रावुपवेश्य स्वयं प्रत्यङ्मुख उपविश्य विप्रपादौ मण्डले निधाय पुरूरवार्द्रवसंज्ञका विश्वे देवा इदं वः पाद्यं स्वाहा नम इति यवोदकं पादयोर्दत्त्वा शं नो देवी० तु नः। इति मन्त्रेण पादौ प्रक्षालयेत्। एवमुत्तरत्र। ततः प्राचीनावीती दक्षिणमण्डलसमीपे मुख्यपितृविप्रमुदङ्मुखमुपवेश्य तत्पादौ मण्डले निधाय, अस्मत्पितरमुकशर्मन्नमुकगोत्र वसुरूप सप-

१ ग. 'इमम्'।

त्नीकेदं ते पाद्यं स्वधा नम इति तिलोदकं पादयोर्दत्त्वा शं नो देवीरिति पादौ क्षालयेत् । एवं सर्वेषां तत्तदुच्चारपूर्वकं पाद्यं कृत्वा मण्डलयोरुत्तरतो ब्राह्मणान्द्विराचाम्य स्वयमप्याचामेत् । ततः श्राद्धस्थले कम्बलाद्यासनेषु वैश्वदेविकौ प्राङ्मुखौ पित्र्यार्थानुदङ्मुखान्द्विप्रांस्तत्तद्रूपान्ध्यायन्नुपवेशयेत् । तत आचम्य पवित्रपाणिः प्राणानायम्य देशकालौ स्मृत्वा प्राचीनावीती, अस्मत्पितृपितामहप्रपितामहानाममुकशर्मणाममुकगोत्राणां वसुरुद्रादित्यस्वरूपाणां सपत्नीकानाम् । अस्मन्मातामहमातुःपितामहमातुःप्रपितामहानाममुकशर्मणाममुकगोत्राणां वसुरुद्रादित्यस्वरूपाणां सपत्नीकानामेतेषां तृप्त्यर्थं दर्शश्राद्धं करिष्य इति संकल्प्य, अपहता असुरा० तं मन इत्यप्रदक्षिणं सर्वतस्तिलानवकीर्य, उदीरता० हवेषु । इति जपित्वा दर्भोदकेनान्नान्यभ्युक्ष्य गयां जनार्दनं वस्वादिरूपान्पितॄंश्च ध्यात्वा यज्ञोपवीती देवार्चनं कुर्यात् । तत्र दैविकविप्रहस्तयोरपो दत्त्वा पुरूरवार्द्रवसंज्ञकानां विश्वेषां देवानामिदमासनम् । इत्येकैकस्याऽऽसने दक्षिणतः प्रागग्रानृजून्युग्मान्दर्भान्दत्त्वाऽपो दद्यात् । अथाभ्युक्षितायां भुवि प्रागग्रान्दर्भानास्तीर्य तेषु न्युब्जमेकमर्घ्यपात्रमासाद्योत्तानीकृत्य तस्मिन्दर्भद्वयात्मकं प्रागग्रं पवित्रं निधायाप आसिच्य शं नो देवी० तु न इत्यनुमन्त्र्य यवोऽसि धा० स्वृतम् । इति यवान्निोप्य गन्धपुष्पाणि क्षिप्त्वा देवपात्रं संपन्नमित्यभिमृश्य यवहस्तो विश्वान्देवानावाहयिष्यामीत्युक्त्वा, आवाहयेति विप्राभ्यामुक्ते विश्वे देवास आ० दत । इति दक्षिणाङ्गाद्वामाङ्गसंस्थं पादजान्वंसशिरःसु यवानवकीर्य, आगच्छन्तु० भवन्तु त इत्युपस्थाय स्वाहार्घ्या इत्यर्घ्यपात्रमुभयोः सकृन्निवेद्याथ प्रथमं प्रत्येकमन्या अपो दत्त्वाऽर्घ्यपात्रादर्घ्यमादाय पुरूरवार्द्रवसंज्ञका विश्वे देवा इदं वोऽर्घ्यमिति दत्त्वा या दिव्या आपः० भवन्तु इति स्रवन्तीरपोऽनुमन्त्र्यापो दद्यात् । एवं द्वितीयस्यावशिष्टमर्घ्यं दद्यात् । तत उभयोः प्रत्युपचारमाद्यन्तयोरद्दानपूर्वकं गन्धपुष्पधूपदीपान्द्विर्द्विर्दत्त्वा सकृदाच्छादनं दत्त्वाऽर्चनविधेः संपूर्णताऽस्त्विति भवन्तो ब्रुवन्त्वित्युक्त्वा संपूर्णमस्त्विति विप्रैः प्रत्युक्ते युष्मदनुज्ञया पित्रर्चनं करिष्य इत्युक्त्वा कुरुष्वेत्यनुज्ञातः प्राचीनावीती, आग्नेय्यभिमुख उपविश्य पित्रर्चनं कुर्यात् । प्रथमविप्रहस्तेऽपो दत्त्वाऽस्मत्पितुरमुकशर्मणोऽमुकगोत्रस्य वसुरूपस्य सपत्नीकस्येत्येकवदस्मत्पितृ-

णाममुकशर्मणाममुकगोत्राणां वसुरूपाणां सपत्नीकानामिति बहुवद्वा निर्देशं कृत्वेदमासनमिति दर्भानयुग्मान्द्विगुणभुग्नानासने वामभागे दत्त्वाऽपो दद्यात्। एवं सर्वत्र तत्तद्विभक्त्या पित्रादीनामेकवद्वा बहुवद्वा निर्देशं कुर्यात्। अस्मत्पितामहस्य० अस्मत्पितामहानामित्यादि वा सर्वेषामासनानि दत्त्वा पितृविप्रसमीपे भुवमभ्युक्ष्य दक्षिणाग्रान्दर्भानास्तीर्य प्रतिवर्गं त्रीणि त्रीणि पात्राणि न्यग्बिलानि दक्षिणापवर्गाणि निधायोत्तानानि कृत्वा तेषु दर्भत्रयात्मकानि पवित्राण्यन्तर्धायाप आसिच्य शं नो देवी० तु न इति सर्वाणि सकृन्मन्त्रेणानुमन्त्र्य तिलोऽसि सोमदे० स्वधा नमः। इति पृथक्पृथङ्मन्त्रावृत्त्या तिलानोप्य गन्धपुष्पाणि क्षिप्त्वा पितृपात्रं संपन्नम्। पितामहपात्रं संपन्नम्। प्रपितामहपात्रं०। मातामह०। मातुःपितामहपा०। मातुःप्रपितामहपात्रं संपन्नमिति यथालिङ्गं पात्राण्यभिमृश्य तिलहस्तः, अस्मत्पितरममुकशर्माणमित्यादिप्रपितामहान्तं द्वितीयान्तमुच्चार्याऽऽवाहयिष्यामीत्युक्त्वा तैरावाहयेत्युक्ते वामाङ्गादिदक्षिणाङ्गसंस्थमेकैकस्मिञ्शिरोंसजानुपादेषु, उशन्तस्त्वा नि० अत्तवे। इति मन्त्रेण तिलानवकीर्य, आयन्तु नः पितरः० त्वस्मानित्युपस्थाय यज्ञोपवीती स्वधार्घ्या इति मन्त्रावृत्त्या तत्तदर्घ्यपात्रं तत्तद्विप्राग्रे निवेद्य प्रथमविप्रहस्तेऽपो दत्त्वा सशेषमर्घ्यमादाय दक्षिणेन पाणिना सव्योपगृहीतेन पितरिदं तेऽर्घ्यमिति पितृतीर्थेन दत्त्वा या दिव्या इत्यनुमन्त्र्यापो दद्यात्। एवं पितामहादीनां दत्त्वेतरानर्घ्यशेषानाद्यपात्रार्घ्यशेषे निनीय ताद्भिरद्भिः पुत्रकामो मुखमनक्ति। अप उपस्पृश्य तत्पात्रं शुचौ देशे पितृभ्यः स्थानमसीति मन्त्रेण निधाय प्रपितामहार्घ्यपात्रेणापिदध्यात्। न्यग्बिलं वा कुर्यात्। तदक्षय्यवाचनान्तं न चालयेत्। प्राचीनावीती, अस्मत्पितरमुकशर्मन्नित्यादिसंबुद्ध्यन्तमुक्त्वाऽऽद्यन्तयोरुदानपूर्वकं काण्डानुसमयेन पदार्थानुसमयेन वा सर्वेषां गन्धाद्याच्छादनान्तान्पञ्चोपचारान्दत्त्वाऽर्चनविधेः संपूर्णतां वाचयित्वा भोजनार्थादन्नादन्नमुद्धृत्य सर्पिषाऽभ्यज्य[1](ज्य) ब्राह्मणपाणिषु दर्भानन्तर्धाय सव्यहस्तेन दक्षिणहस्त आज्येनोपस्तीर्य भध्यात्पूर्वार्धादवदाय पश्चाद्वर्त्ती तु पश्चार्धात्तृतीयमवदायं सव्यहस्तेन पात्रस्थमवत्तं चाभिघार्य सोमाय पितृमते स्वधा नम इति प्रथमाहुतिं हुत्वा सोमाय पितृमत इदं न ममेति त्यजेत्। पुनः पूर्ववदवदाय, अग्नये कव्यवाहनाय स्वधा नमः। अग्नये कव्यवाहनायेदं

१ ग. °ध पा°।

न ममेति द्वितीयां जुहुयात् । एवं सर्वविप्रपाणिषु द्वे द्वे आहुती जुहुयात् । अपि वा, एकैकामाहुतिं विगृह्य सर्वेषु विप्रपाणिषु जुहुयात् । यज्ञोपवीती भोजनपात्रस्थापनार्थं दैवे चतुरस्रे मण्डले गोमयेन विधाय पित्र्ये वृत्तानि विधाय दैवे सयवान्पित्र्ये सतिलान्दर्भान्प्रास्य भोजनपात्राणि निधायाऽऽज्येनोपस्तीर्यान्नानि परिवेष्य पितृपात्रान्नेषु हुतशेषं तूष्णीं परिविष्य प्रथमदैविकं पात्रं तूष्णीं परिषिच्य पृथिवी ते पात्रं द्यौरपिधानं ब्रह्मणस्त्वा मुखेऽमृतेऽमृतं जुहोमि ब्राह्मणानां त्वा विद्यावतां प्राणापानयोर्जुहोम्यक्षितमसि मा मे क्षेष्ठा अमुत्रामुष्मिँल्लोक इति पात्रसहितमन्नमभिमन्त्र्य ब्राह्मणपाण्यङ्गुष्ठम् इदं विष्णुर्वि० सुरे । विष्णो हव्यं रक्षस्वेत्यन्ने निवेश्य यवोदकमादाय पुरूरवार्द्रवसंज्ञका विश्वे देवा देवता इदमन्नं हविरयं ब्राह्मण आहवनीयार्थ इयं भूमिर्गयाऽयं भोक्ता गदाधर इदमन्नं ब्रह्मणे दत्तं सुवर्णपात्रस्थमक्षय्यवटच्छायेयमित्युक्त्वा पुरूरवार्द्रवसंज्ञकेभ्यो विश्वेभ्यो देवेभ्य इदमन्नममृतरूपं परिविष्टं परिवेक्ष्यमाणं चाऽऽ तृप्तेः स्वाहेत्युत्सृज्य, एवं द्वितीये ये देवासो० जुषध्वम् । इत्युपस्थाय प्राचीनावीती पितृविप्रपात्रं तूष्णीं परिषिच्य पृथिवी ते पात्रं० विष्णो कव्यं रक्षस्व । तिलोदकमादाय पिताऽमुकशर्माऽमुकगोत्रो वसुरूपो देवतेदमन्नं० दत्तं रजतपात्रस्थमक्षय्यवटच्छायेयम् । अस्मत्पित्रेऽमुकशर्मणेऽमुकगोत्राय वसुरूपायेदमन्नममृतरूपं० चाऽऽ तृप्तेः स्वधा । एवं सर्वेषां तत्तदुच्चारपूर्वकमुत्सृज्य ये चेह पितरो ये० जुषस्वेत्युपस्थाय यज्ञोपवीती, अन्नेषु मधु सर्पिर्वाऽऽसिच्य सप्रणवव्याहृतिकां सावित्रीं जपित्वा मधु वाता ऋ० इति तिस्र ऋचश्च जपित्वा मधु मधु मधु इति त्रिरुक्त्वा पितॄननुस्मृत्याऽऽपोशनं प्रदाय ब्राह्मणान्यथासुखं जुषध्वमिति भोजनायातिसृजेत् । भुञ्जानान्राक्षोघ्नपित्र्यादीनि श्रावयेत् । अथ तृप्ताञ्ज्ञात्वा मधुमतीस्तिस्रोऽक्षन्नमीमदन्तेति चैकां श्रावयित्वा संपन्नमिति ब्राह्मणान्पृ(न्पृ)ष्ट्वा सुसंपन्नमिति प्रत्युक्तो भुक्तशेषात्सार्ववर्णिकमन्नं पिण्डार्थं प्रकिरणार्थं च पृथगुद्धृत्य शेषं ब्राह्मणेभ्यो निवेदयेत् । शेषमन्नं किं क्रियतामिति विप्रास्तत्त्वी कुर्युरिष्टैः सह भुज्यतामिति वा वदेयुः । ततो विप्रैरुत्तरापोशनादिशुद्धा(द्ध्या)चमनान्तं कारयित्वा पिण्डदानं कुर्यात् । उत्तरापोशनात्पूर्वं वा । तद्यथा विप्रोच्छिष्टान्ते स्फ्येन दर्भमूलेन वा, अपहता असुरा रक्षांसि

१ ङ. न विप्राणामृत[?] ।

वेदिपद इत्याग्नेयीसंस्थं लेखाद्वयमुलिख्य तत्प्रत्येकमभ्युक्ष्य बर्हिषाऽवस्तीर्य प्राचीनावीती प्रथमलेखायां बर्हिषि मूलमध्यान्तेषु पिण्डदेशेषु शुन्धन्तां पितरः शुन्धन्तां पितामहाः शुन्धन्तां प्रपितामहा इति पितृतीर्थेन तिलोदकं निनीय तथैव द्वितीयलेखायां शुन्धन्तां मातामहा इत्यादि। तत एतत्तेऽमुकशर्मन्ये च त्वामत्रानु तेभ्यश्चेति पित्रे पिण्डं दत्त्वा पितामहादिभ्यस्तत्तन्नामोच्चारपूर्वकं दद्यात्। ततः, अत्र पितरो मादयध्वमिति पिण्डान्सकृदनुमन्त्र्य सव्यावृदावृत्योदङ्मुखो भूत्वा यथाशक्त्यायतप्राणः सन्नासित्वा प्रत्यावृत्य, अमीमदन्त पितरो० यीषत । इति पुनः सकृत्पिण्डाननुमन्त्र्य पिण्डशेषचरुमवघ्रायाऽऽचम्य शुन्धन्तां पितर इत्यादि पिण्डेषु पूर्ववत्तिलोदकं निनीयासावभ्यङ्क्ष्वासावङ्क्ष्वेति यथालिङ्गं पिण्डेष्वभ्यञ्जनाञ्जने दत्त्वा वासःस्थाने दशामूर्णास्तुकां वा, एतद्वः पितरो० युञ्ज्ध्वम्। इति प्रतिवर्गं दद्यात्। उत्तरे वयसि स्वहृंल्लोम दद्यात्। अथ पिण्डान्गन्धादिभिरभ्यर्च्य प्राञ्जलिस्तिष्ठन्नुपतिष्ठेत नमो वः पितर इषे० चेमहि । इति चतसृभिरुपस्थाय परेतन० नियच्छतेति पिण्डस्थान्पितॄन्प्रवाहयेत् । अथ पिण्डान्नमस्कृत्य वीरं मे दत्त पितर इति मध्यमं पिण्डद्वयमादाय, आधत्त पितरो गर्भं० असत्। इति पुत्रकामः पत्नीं प्राशयेत् । इतरान्पिण्डानप्सु प्रक्षिपेत्। अग्नौ वा जुहुयात्। गवे वा ब्राह्मणाय वा दद्यात्। ततः प्रकिरणार्थं सार्ववर्णिकं पूर्वं पृथगुद्धृतमन्नमुदकेन परिप्लाव्य विप्रोच्छिष्टान्ते दक्षिणाग्रान्दर्भानास्तीर्य तेषु ये अग्निदग्धा० कल्पयस्वेति तदन्नं प्रकीर्य

अग्निदग्धाः कुले जाता नाग्निदग्धाः कुले मम ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥

इति तिलोदकं निनीयाऽऽचामेत्। अथ ब्राह्मणहस्तेष्वपो दर्भांश्च दत्त्वा दैवे यवान्पित्र्ये तिलांश्चावधाय पुनरपो दद्यादेषा हस्तशुद्धिः । अथ ब्राह्मणानभिवाद्य, अस्मद्गोत्रं वर्धतामिति गोत्रवृद्धिं याचेत। युष्मद्गोत्रं वर्धतामिति विप्रा वदेयुः । कर्ता विप्रोच्छिष्टानि चालयित्वा पुरूरवार्द्रवसंज्ञका विश्वे देवाः स्वस्तीति ब्रूतेति दैविकविप्रहस्तयोरपो दद्यात् । ताभ्यां स्वस्तीति प्रत्युक्ते प्राचीनावीती पित्रादीनां संबुद्ध्यन्तमुच्चारणं कृत्वा स्वस्तीति ब्रूतेत्यपो दद्यात् ।

---

१ ग. 'इद्वयलो' । २ क. ख. 'कं पू' । ३ ग 'रिप्राप्ला' ।

स्वस्तीति प्रतिवचनम् । यज्ञोपवीती पुरूरवार्द्रव० विश्वेषां देवानां यद्दत्तं श्राद्धं तदक्षय्यमस्त्विति ब्रूतेति यवोदकं दत्त्वा, अक्षय्यमस्त्विति प्रत्युक्ते प्राचीनावीती पित्रादीन्पक्षचन्तानुच्चार्य यद्दत्तं श्राद्धं तदक्षय्यमस्त्विति ब्रूतेति तिलाम्बु दत्त्वा पूर्वस्थापितमर्घ्यपात्रं निवृत्य यज्ञोपवीती ब्राह्मणेभ्यो मुखवासताम्बूलादि दत्त्वा दक्षिणां दत्त्वा तान्पादाभ्यङ्गादिभिः प्रियोक्तिभिश्च परितोष्य कर्मणः संपूर्णतां वाचयित्वा ॐ स्वधोच्यतामिति ब्रुवन्नितृपूर्वं विसृजेत् । विप्राश्चास्तु स्वधेति ब्रुवन्त उत्तिष्ठेयुः । कर्ता पिण्डनिपरणदेशं संमृज्य तत्र तिलान्प्रास्य तत्र शान्तिरस्तु पुष्टिरस्तु तुष्टिरस्तु, इत्युदकधारामासिच्य तथाऽस्त्विति विप्रैः प्रत्युक्ते दक्षिणामुखः प्राञ्जलिस्तिष्ठन्वरान्याचेत

दातारो नोऽभिवर्धन्तां वेदाः संततिरेव नः ।
श्रद्धा च नो मा व्यगमद्बहु देयं च नोऽस्तु ॥ इति ।
दातारो वोऽभिवर्धन्तां वेदाः संततिरेव वः ।
श्रद्धा च वो मा व्यगमद्बहु देयं च वोऽस्तु ॥

इति विप्राः प्रतिवदेयुः । कर्ता यस्य स्मृत्या च० च्युतम् । मन्त्रहीनं० मम । यः कश्चिच्छ्राद्ध० स्तु मे । सर्वं संपूर्णमस्त्विति विप्राः । कर्ताऽनेन दर्शश्राद्धयज्ञेन भगवान्पितृस्वरूपी परमेश्वरः प्रीयताम् । तत्सद्ब्रह्मार्पणमस्तु इत्युक्त्वा विप्रोच्छिष्टान्युद्वास्य भूमौ निखन्याऽऽच्छाद्य गृहं गोमयेनोपलिप्य श्राद्धशेषेण वैश्वदेवादिकं कृत्वा श्राद्धशेषमिष्टैः सह भुञ्जीतेति ।

इति श्रीमच्चित्तपावनकेळ० श्राद्धमञ्जर्यां केवलगृह्यपरिशिष्टोक्तो दर्शश्राद्धप्रयोगः ।

---

अथ सूत्रोक्तः पार्वणश्राद्धप्रयोगः । स च पूर्वोक्तविस्तरेण प्रयोगकरणाशक्तौ कर्तव्यः ।

यद्बल्पं वा स्वगृह्योक्तं यस्य यत्कर्म चोदितम् ।
तस्य तावति शास्त्रार्थे कृते सर्वं कृतं भवेत् ॥

इति वचनात् । अपि वा शक्तौ सत्यामपि स्वगृह्योक्त एव कार्यो न शाखान्तरदृष्टविस्तरः कार्य इति वृत्तिकृदुक्तेः । अतो वृत्तिकृत्कारिका-

काराभ्यां किंचित्किंचिदर्थाक्षितस्वावश्यकमन्यादिशास्त्रान्तरपरिग्रहेणानुष्ठेयार्थो निरूपितस्तदनुसारेणैवोच्यते । तत्र मातामहादीनामनुक्तावपि स्वाविरुद्धमन्यतो ग्राह्यमित्युक्तत्वाच्छिष्टाचाराच्च तत्परिग्रहेणैव प्रयोगोऽभिधीयते । श्राद्धकर्ता श्राद्धदिनात्पूर्वेद्युः सायं श्राद्धदिने वा प्रातर्ब्राह्मणान्निमन्त्रयेत् । श्वोऽद्य वा करिष्यमाणदर्शश्राद्धे पुरूरवार्द्रवसंज्ञकविश्वदेवस्थाने त्वया क्षणः करणीय इति वैश्वदेवार्थमेकं द्वौ वा निमन्त्र्य प्राचीनावीती, अद्य करिष्यमाणदर्शश्राद्धेऽस्मत्पितुरमुकशर्मणोऽमुकगोत्रस्य वसुरूपस्य सपत्नीकस्य स्थाने त्वया क्षणः करणीयः । ॐ तथेति प्रतिवचनम् । एवं पितामहाद्यर्थास्तत्तन्नामोच्चारपूर्वकं निमन्त्रयेत् । अतः परं ब्राह्मणानां कर्तुश्च ब्रह्मचर्यम् । ततः श्राद्धदिने मध्याह्ने स्नात्वा दर्शश्राद्धाङ्गतर्पणं विधाय ब्राह्मणान्समाहूय तैः स्नानं कारयित्वा यज्ञोपवीती पवित्रे धृत्वाऽऽचम्य प्राणानायम्य देशकालौ स्मृत्वा प्राचीनावीती, अस्मत्पितुरमुकशर्मणोऽमुकगोत्रस्य वसुरूपस्य सपत्नीकस्यास्मत्पितामहस्यामुकशर्मणोऽमुकगोत्रस्य रुद्ररूपस्य सपत्नीकस्यास्मत्प्रपितामहस्यामुक० आदित्यरूपस्य सपत्नीकस्यास्मन्मातामहस्यामु० अस्मन्मातुःपितामहस्यामु० अस्मन्मातुःप्रपितामहस्यामु० आदित्यरूपस्य सपत्नीकस्यैतेषां तृप्त्यर्थं दर्शश्राद्धं करिष्ये । ततस्तान्विप्रान्स्नातान्स्वयं कर्त्रा वा प्रक्षालितपादान्द्विराचान्तानुपवेशयेत् । तत्र द्वौ प्राङ्मुखौ दैविकौ वैश्वदेवस्वरूपौ ध्यायन्नुपवेश्य, पित्राद्यर्थान्ममैते पितर इति ध्यायन्नुदङ्मुखानुपवेशयेत् । ततो यज्ञोपवीती देवार्चनं कुर्यात् । प्रथमवैश्वदेविकविप्रहस्तेऽपो दत्त्वा पुरूरवार्द्रवसंज्ञकानां विश्वेषां देवानामिदमासनम् । इति दक्षिणभाग ऋजून्युग्मान्दर्भानासने दत्त्वाऽपो दद्यात् । एवं द्वितीये दैवेऽर्घ्यदानमावाहनं च कृताकृतम् । पुरूरवा० विश्वे देवा अमी वो गन्धाः स्वाहा नमो न मम । एवमाद्यन्तयोरब्दानपूर्वकं गन्धमाल्यधूपदीपाच्छादनानि दद्यात् । प्राचीनावीती, अपो दत्त्वाऽस्मत्पितुरमुकशर्मणोऽमुकगोत्रस्य वसुरूपस्य सपत्नीकस्येदमासनमिति वामभागे द्विगुणभुग्नान्दर्भानासने दत्त्वाऽपो दद्यात् । एवं पितामहादीनां तत्तदुच्चारपूर्वकमासनानि दद्यात् । ततो दर्भेषु पञ्चार्घ्यपात्राण्याग्नेयीसंस्थान्यासाद्य तेषु दर्भत्रयात्मकानि पवित्राणि निधायाप आसिच्य शं नो देवीरिति सकृदनुमन्त्र्य तिलोऽसि सोम० स्वधा

---

१ ग. 'दिद'।

नम इति मन्त्रावृत्त्या प्रतिपात्रं तिलानोप्य गन्धपुष्पाणि क्षिप्त्वा यज्ञोपवीती तत्तदर्घ्यपात्रं तत्तद्विप्राग्रे स्वधाऽर्घ्या इति मन्त्रावृत्त्या प्रत्येकं निवेदयेत् । सन्त्वर्घ्या इति प्रतिवचनम् । एकब्राह्मणपक्षे तस्मा एव सकृन्मन्त्रेण सर्वाणि निवेदयेत् । एकस्य स्थानेऽनेकब्राह्मणपक्षे तदर्घ्यपात्रं सकृन्मन्त्रेण युगपत्सर्वेभ्यो निवेदयेत् । ततोऽन्या अपः प्रदाय दक्षिणहस्तेन सशेषमर्घ्यमादाय सव्योपगृहीतेन सपत्नीक पितरिदं तेऽर्घ्यमिति दत्त्वा या दिव्या आपः० भवन्तु । इति विप्रहस्तात्स्रवन्तीरपोऽनुमन्त्र्यापो दद्यात् । एवं पितामहादीनां तत्तन्मन्त्रेणार्घ्यदानम् । एकब्राह्मणपक्षे तस्मा एव सर्वाण्यर्घ्याणि प्रत्येकमाद्यन्तयोरुदकदानपूर्वकं दद्यात् । अनेकब्राह्मणपक्षे तदेवार्घ्यं विगृह्य सर्वेभ्यो दद्यात् । ततः प्रथममर्घ्यपात्रं पित्र्यविप्रवामभागेऽन्यत्र वा शुचौ देशे निधाय तस्मिन्नितरार्घ्यपात्रस्थान्संस्रवान्समवनीय ताभिरद्भिः पुत्रकामश्चेन्मुखमनक्ति अपः स्पृष्ट्वा तत्पात्रं प्रपितामहपात्रेणापिधाय तदा श्राद्धसमाप्तेर्न चालयेत् । ततः प्राचीनावीती, अस्मत्पितृपितामहप्रपितामहा अमुकशर्माण इत्याद्युच्चार्य एष वो गन्धः स्वधा नमो न मम । एवमाद्यन्तयोरुदकदानपूर्वकं गन्धपुष्पधूपदीपाच्छादनानि प्रदाय भोजनपात्राण्यासाद्य भोजनार्थादन्नादन्नमादाय घृताक्तं कृत्वा प्राचीनावीती पित्र्यविप्रपाणिषु मेक्षणेन हस्तेन वाऽवदानधर्मेण सामाय पितृमते स्वधा नमः । सोमाय पितृमत इदं० । अग्नये कव्यवाहनाय स्वधा नमः । अग्नये कव्यवाहनायेदं० इति प्रत्येकं द्वे द्वे आहुती जुहुयात् । अपि वा, एकैकामाहुतिं विगृह्य सर्वेषु विप्रपाणिषु जुहुयात् । विप्राः स्वस्वपाणिस्थमन्नं स्वस्वपात्रे संस्थाप्य बहिर्गत्वाऽऽचम्य यथास्थानमुपविशेयुः । कर्ता यज्ञोपवीती देवपूर्वमन्नं भोजनपर्याप्त्याधिक परिविष्य हुतशेषं सर्वेषु पितृपात्रेषु दद्यात् । ततो यज्ञोपवीती देवपात्रस्थमन्नं सावित्र्याऽभ्युक्ष्य पुरूरवार्द्रवसंज्ञकेभ्यो विश्वेभ्यो देवेभ्य इदमन्नममृतरूपं परिविष्टं परिवेक्ष्यमाणं चाऽऽ तृप्तेः स्वाहा हव्यं नमो न ममेति निवेद्य पितृपात्रस्थमन्नं सावित्र्याऽभ्युक्ष्य प्राचीनावीती, अस्मत्पित्रेऽमुकशर्मणेऽमुकगोत्राय वसुरूपाय सपत्नीकायेदमन्नममृतरूपं परिविष्टं परिवेक्ष्यमाणं चाऽऽ तृप्तेः स्वधा कव्यं नमो न मम । एवं पितामहादिभ्यो निवेद्याऽऽपोशनार्थमुदकं दद्यात् । विप्राश्चाग्नं परिषिच्य बलिदानवर्जमापोशनं कृत्वा प्राणाहुतीर्गृहीत्वोक्तनियमयुक्ता भुञ्जीरन् । कर्ता यज्ञोपवीती भुञ्जानाच्चाक्षोभ्यपित्र्यादीनि च श्रावयेत् । तेषु तृप्तेषु मधु वाता ऋतायते म० इति तिस्रोऽक्षन्नमीमदन्तेति पंक्ता

श्रावयेत् । ततो ब्राह्मणान्पृच्छति संपन्नमिति। ते च संपन्नमिति प्रत्यूचुः। ततः कर्ता भुक्तशेषात्सार्ववर्णिकमन्नं पिण्डार्थं प्रकिरणार्थं चोद्धृत्य शेषं ब्राह्मणेभ्यो निवेदयेत् । शेषमन्नं किं क्रियतामिति । विप्रास्तत्स्वी कुर्युरिष्टैः सह भुज्यतामिति वा वदेयुः । ततः कर्ता पिण्डदानं कुर्यात्। द्विजोच्छिष्टसमीप आग्नेयीसंस्थां लेखामुल्लिखेत् । अपहता असुरा रक्षांसि वेदिषदः । तत्पश्चात्तथैवोल्लिख्य क्रमेणाभ्युक्ष्य बर्हिर्द्वयमास्तीर्य प्राचीनावीती पूर्वस्यां त्रिरुदकं निनयेत् । शुन्धन्तां सपत्नीकाः पितराद्या इति षड्वारमुदकं निनयेत् । ततः षट् पिण्डान्कृत्वा, एतत्तेऽस्मत्पितरमुकशर्मन्नमुकगोत्र वसुरूप सपत्नीक ये च त्वामन्वान्नु इति पित्रे पिण्डं दत्त्वा एतत्तेऽस्मत्पितामहेत्यादिमातुःप्रपितामहान्तेभ्यो दद्यात् । अथ पिण्डस्थान्पितॄननुमन्त्रयेत् । अत्र पितरो० यध्वम् । सव्यावृदुदङ्ङावृत्य यथाशक्ति प्राणान्नियम्याभिपर्यावृत्य, अमीमदन्त० षीपत। इति पुनः पिण्डाननुमन्त्र्य यज्ञोपवीती चरुशेषमवघ्रायाऽऽचम्य प्राचीनावीती पूर्ववच्छुन्धन्तामित्यादि पिण्डेषु जलं निनयेत् । ततः पितरमुकशर्मन्नमुकगोत्र वसुरूप सपत्नीकाभ्यङ्क्ष्वेति तैलाभ्यञ्जने दद्यादेवमितरेषु तथैवाङ्क्ष्वेत्यञ्जनम् । अथ दशामूर्णास्तुकां वा दद्यात् । पञ्चाशद्वर्षताया ऊर्ध्वं स्वीयप्रकोष्ठस्थं हृत्स्थं वा लोम दद्यात्। एतद्वः० युङ्ध्वम् । इति प्रतिपार्वणं मन्त्रावृत्तिः । अथ पिण्डस्थान्पितॄनुपतिष्ठेत नमो वः पितर इषे० स्याम । मनोन्वाहुवामह इति च तिसृभिः । अथैनान्प्रवाहयेत् । परेतन० नियच्छत । ततो वीरं मे दत्त पितर इति मन्त्रावृत्त्या मध्यमं पिण्डद्वयमादायाऽऽधत्त पितरो ग० असदिति पत्नीं प्राशयेत् । अवशिष्टान्पिण्डानप्स्वग्नौ वा क्षिपेत् । ततो विप्रैरुत्तरापोशनादिशुद्धा(द्ध्या)चमनान्तं कारयित्वा पूर्वोद्धृतमन्नं सजलं विप्राणामग्रतस्तूष्णीं भुवि प्रकिरन्नुत्सृजेत्। ततः पूर्वासादितमर्घ्यपात्रं चालयेत् । यज्ञोपवीती ब्राह्मणेभ्यो दक्षिणां यथासंभवं गोहिरण्यालंकारादि दत्त्वा ॐ स्वधोच्यतामिति अस्तु स्वधेति वोक्त्वा विसृजेत् । ते च ॐ स्वधा, अस्तु स्वधेति वा ब्रुवन्त उत्तिष्ठेयुः । कर्ता दक्षिणामुखस्तिष्ठन्वरान्याचेत । दातारो०व नः । श्रद्धा च नो०स्त्विति । विप्राः । दातारो वो०व वः । श्रद्धा च वो०स्त्विति प्रतिवदेयुः । कर्ता यस्य स्मृत्या०च्युतम् । मन्त्रहीनं०मम । यः कश्चिच्छ्राद्धयज्ञ०स्तु मे । सर्वं संपूर्णमस्त्विति विप्राः । कर्ताऽनेन दर्शश्राद्धयज्ञेन भगवान्पितृस्वरूपी परमेश्वरः प्रीयताम् । तत्सद्ब्रह्मार्पणमस्तु।

ततो ऽशिष्टोच्छिष्टान्युद्वास्य भूमौ निखन्याऽऽच्छाद्य गृहं गोमयेनोपलिप्य श्राद्धशेषेणैव वैश्वदेवादिकं कृत्वेष्टैः सह भुञ्जीतेति।

इति श्रीमाचित्तपावनके० श्राद्धमञ्जर्यां संक्षिप्तः सूत्रोक्तः पार्वणश्राद्धप्रयोगः समाप्तः।

---

अथ दर्शश्राद्धपिण्डपितृयज्ञयोर्व्यतिषङ्गप्रयोगः। चतुर्दश्यां सायंहोमानन्तरममावास्यायां वा प्रातर्होमानन्तरं दर्शश्राद्धार्थं ब्राह्मणान्निमन्त्र्य तान्पाकसिध्द्युत्तरं समाहूय तैः स्नानं कारयित्वा स्वयं स्नातो दर्शश्राद्धाङ्गतर्पणं कृत्वाऽऽचम्य धृतपवित्रः प्राणानायम्य देशकालौ संकीर्त्य प्राचीनावीती, अस्मत्पितृपितामहप्रपितामहानाममुकश०गो०व० सपत्नीकानाम्। अस्मन्मातामह० सपत्नीकानां तृप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं दर्शश्राद्धं पिण्डपितृयज्ञं च व्यतिषङ्गेण करिष्य इति संकल्प्य यज्ञोपवीती, औपासनाग्निं प्रज्वाल्याऽऽग्नेय्यभिमुखोऽग्निं ध्यात्वाऽऽग्नेयीमारभ्याप्रदक्षिणं सकृत्परिसमुह्याऽऽग्नेय्यग्रकैर्दर्भैरप्रदक्षिणं परिस्तीर्य तथैव पर्युक्ष्याग्नेरी(रै)शान्यां वायव्यां वाऽऽग्नेय्यग्रकान्दर्भानास्तीर्याभ्युक्ष्य तत्र चरुस्थालीं शूर्पं स्फ्यमुलूखलं मुसलं स्रुवं ध्रुवां कृष्णाजिनं सकृदाच्छिन्नं बर्हिर्द्वयमिध्मं मेक्षणं कमण्डलुमिति द्वादश पात्राणि न्यग्बिलान्येकैकश आग्नेयीसंस्थान्यासाद्योत्तानानि कृत्वा कमण्डलुजलेन प्रोक्ष्य स्थालीं शूर्पं चाऽऽदायाग्नेर्दक्षिणतोऽवस्थितं व्रीहिमच्छकटं दक्षिणत आरुह्य शूर्पे स्थालीं निधाय तां व्रीहिभिः पूरयित्वा यथा स्थालीमुखोपरिस्था व्रीहयः शूर्पे निपतन्ति तथा स्थालीं निमृज्य शूर्पे पतितान्व्रीहीञ्छकटे प्रास्याग्नेः पश्चिमतो वायव्यग्रीवमूर्ध्वलोमकृष्णाजिनमास्तीर्य तत्रोलूखलं निधाय तस्मिन्स्थालीस्थान्व्रीहीनोप्याऽऽग्नेय्यभिमुख्या तिष्ठन्त्या पत्न्याऽवहतान्सकृत्फलीकृतानविविच्य सकृत्प्रक्षालिततण्डुलांश्चरुस्थाल्यां समोप्याग्नावधिश्रित्य जीवतण्डुलं चरुं श्रपयेत्। किंचिदपक्वश्चरुर्जीवतण्डुलचरुरित्येकोऽर्थः। जीवतण्डुलानामित्यपरः। जीवतण्डुलक्षणं मैत्रायणीयपरिशिष्टे—

पुराणा व्रीहयो येषां बीजमुप्तं प्ररोहति।
तेषां ये तण्डुला जाता ज्ञेयास्ते जीवतण्डुलाः॥ इति।

---

१ ग. ॑ग्तर द्°। २ ग स्पृश्त। ३ ग. ॑र्थं मरेर्न इ°।

ततश्चरुस्थाल्यास्पेयासेरेकं प्रदीप्तमुल्मुकं गृहीत्वाऽग्नेराग्नेय्यां दिशि कृतस्थण्डिले ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति। परा पुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात् ।

इति मन्त्रेण निधाय तमतिप्रणीताख्यमग्निं पूर्ववत्परिसमुह्याऽऽग्नेय्याग्रैः कुशैः परिस्तीर्य पर्युक्ष्याऽऽग्नेय्यभिमुख औपासनातिप्रणीतयोरन्तराले स्फ्येन लेखामुल्लिखेत । अपहता असुरा रक्षांसि वेदिषदः । तत्पश्चात्पूर्व मन्त्रावृत्त्या द्वितीयामुल्लिख्य तल्लेखाद्वयं तूष्णीमद्भिरभ्युक्ष्य सकृदाच्छिन्नपर्णाद्यर्थेन लेखाद्वयमवस्तीर्याऽऽज्यं विलापितमनुत्पूतं ध्रुवायामासिच्यापि वा नवनीतं पात्रान्तरे गृहीत्वा लौकिकाग्नौ विलीनमात्रं कृत्वाऽन्यस्मिन्पात्र आनीय पवित्राभ्यां तूष्णीमुत्पूय तदाज्यकार्यार्थं ध्रुवायामासिच्याग्नेर्दक्षिणतो दर्भेषु निधाय स्रुवं संमृज्य तेन ध्रुवास्थमाज्यमादाय चरुमभिघार्योदगुद्वास्यातिप्रणीताग्नेः पश्चाद्दर्भेष्वासाद्य तद्दक्षिणतोऽप्यञ्जनाभ्यञ्जनकशिपूपबर्हणान्यासादयेत् । एतदन्तं पिण्डपितृयज्ञं कृत्वा निमन्त्रितान्विप्रान्स्वागतेनाभिपूज्य पादप्रक्षालनादिभोजनपात्राण्यासाद्य समन्ततो भस्ममर्यादां कृत्वा हस्तशुद्धिं विधायेत्यन्तं पार्वणं कृत्वा पात्रान्तरे पितृयज्ञस्थालीपाकादन्नमुद्धृत्य घृताक्तं कृत्वा प्राचीनावीती, अग्नौ करिष्य इति पित्रर्थद्विजान्पृष्ट्वा क्रियतामिति तैः प्रत्यभ्यनुज्ञातोऽतिप्रणीताग्नेः पश्चादुपविश्य तमर्चयित्वाऽरत्निमितपञ्चदशदारुकमिध्ममभिघारितं पितृतीर्थेन तूष्णीमग्नावाधाय स्रुवेणाऽऽज्यमादाय मेक्षणमुपस्तीर्याद्धृतं चरुं द्वेधा विभज्योत्तरभागमध्यादङ्गुष्ठपर्वमात्रं मेक्षणेनावदाय पुनः पूर्वार्धादवदाय पञ्चावत्ती तु तृतीयं पश्चार्धादवदाय पात्रस्थमवत्तं चाभिघार्यातिप्रणीताग्नौ दक्षिणभागे सोमाय पितृमते स्वधा नम इति पितृतीर्थेन हुत्वा सोमाय पितृमत इदं न ममेति त्यजेत् । पुनस्तथैव दक्षिणभागादवदायाग्नेरुत्तरभाग अग्नये कव्यवाहनाय स्वधा नम इति पूर्ववद्धुत्वा, अग्नये कव्यवाहनायेदमिति त्यजेत् । ततस्तूष्णीं मेक्षणमग्नावनुप्रहरेत् । अपि वा यज्ञोपवीती अग्नये कव्यवाहनाय स्वाहेति प्रथमाहुतिः । सोमाय पितृमते स्वाहेति द्वितीया । अस्मिन्पक्षे मेक्षणानुप्रहरणमपि यज्ञोपवीतिनैव । एतावत्पिण्डपितृयज्ञं कृत्वा विप्रानाचाम्य पात्राण्युपस्तीर्यान्नानि परिविष्येत्यादिशेषमन्नं किं क्रियतामित्यन्तं कृत्वा श्राद्धान्नशेषात्पिण्डार्थमुद्धृतमन्नं पिण्डपितृयज्ञचरुशेषेण संमिश्र्य मधु सर्पिस्तिलयुक्तं च कृत्वा तस्य षट् पिण्डान्कृत्वा ध्रुवा-

१ क. श्र. ४ । १ । ९।

ज्येनाभिधार्य प्राचीनावीती पूर्वास्तृतबर्हिषोः पूर्वासादितकमण्डलुजलं शुन्धन्तां पितर इत्यादिपणमन्त्रैर्निनीय ततः पिण्डदानादिवासोदानान्तं पूर्ववत्कृत्वा कशिपूपबर्हणे निवेद्य पिण्डार्चनादिपिण्डप्रवाहणान्तं कृत्वा, अग्ने तमद्याश्वं० ओहैरिति मन्त्रेणौपासनाग्निं प्रत्येत्य

यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिंसिम ।
अग्निर्मा तस्मादेनसः प्रमुञ्चतु करोतु मामनेनसम् ॥

इति मन्त्रं गार्हपत्यपदरहितं जपेत् । अनेन मन्त्रेणाग्निमुपतिष्ठेत वा । ततः पिण्डानामस्कृत्य वीरं मे दत्त पितर इत्याद्यवशिष्टान्पिण्डानप्स्वग्नौ वा क्षिपेदित्यन्तं पूर्ववत्कृत्वा पूर्वासादितयज्ञपात्राणि द्वंद्वश उत्सृजेत् । चरुस्थालीं शूर्पं च । स्फ्यमुलूखले च । मुसलं स्रुवं च । ध्रुवां कृष्णाजिनं च । अवशिष्टं कमण्डलुं तृणेन सहोत्सृजेत् । तत औपासनाग्नेः परिस्तरणानि विसृज्याऽऽयतनं संमृज्यालं कुर्यात् । एवं पिण्डपितृयज्ञं समाप्य विप्रेभ्य उत्तरापोशनं दत्त्वा गण्डूषादि कारयित्वा तानाचाम्य विकिरदानादिश्राद्धशेषं समापयेत् । आचान्तेषु पिण्डदानमिति पक्षे विप्रैरुत्तरापोशनादिशुद्धा(द्धया)चमनान्तं कारयित्वा पिण्डदानाद्यग्न्यायतनालंकरणान्तं कृत्वा विकिरदानादिश्राद्धशेषं समापयेदिति ।

इति श्रीमच्चित्तपावनकेळकरो० श्राद्धमञ्जर्यां पिण्डपितृयज्ञव्यतिषक्तदर्शश्राद्धप्रयोगः ।

---

अथ पूर्वोक्तप्रयोगाणामधिकारिभेदाद्व्यवस्थोच्यते । अनाहिताग्नेर्गृह्याग्निमत एव पिण्डपितृयज्ञदर्शश्राद्धयोर्व्यतिषङ्गो भवति । खण्डपर्वणि तु पूर्वेद्युर्दर्शश्राद्धमपरेद्युरपराह्णे केवलः पिण्डपितृयज्ञो भवति । केवलपिण्डपितृयज्ञप्रयोगस्तु प्रयोगरत्ने द्रष्टव्यः । आहिताग्निस्तु पिण्डपितृयज्ञं समाप्य ततः पूर्वोक्तपाणिहोमविधिना पार्वणं करोति । अनग्निकस्य पाणिहोम एव । यत्नाग्नावग्नौकरणविधिस्तत्र स्थालीपाकादुद्धृत्य होमः । स्थालीपाकेन भुक्तशेषेण चाग्निसमीपे पिण्डनिपरणम् । पाणिहोमे तु भोजनार्थादन्नादुद्धृत्य घृताक्तं कृत्वा पाणिहोमः । ब्राह्मणसमीपे भुक्तशेषमात्रेण पिण्डनिपरणम् । गृह्याग्निमतः खण्डपर्वणि केवलदर्शश्राद्धे पिण्डपितृयज्ञाभावादाहिताग्निरस्वाणिहोम एव । केचित्तु प्राचेषु सामिनां

१ घ ग 'र्गौ। २ ङ ग विप्रमुख'।

वह्नौ होमो विधीयत इति वचनात्केवलमग्नौकरणमेवेत्याहुः । तत्प्रयोगो रघुनाथीयपद्धत्यनुसारेणोच्यते । पूर्ववत्पाणिहोमात्प्राक्तनं श्राद्धप्रयोगं कृत्वा भोजनार्थादन्नाद्घृताक्तमोदनं गृहीत्वा प्राचीनावीती अग्नौ करिष्य इति पित्रर्थाद्विजान्पृष्ट्वा क्रियतामिति तैरनुज्ञात औपासनसमीपमेत्य तं प्रज्वाल्य कव्यवाहनरूपं ध्यात्वा सकृदप्रदक्षिणं परिसमुह्याऽऽग्नेय्यग्रैर्दर्भैरप्रदक्षिणं परिस्तीर्य तथैव सकृत्पर्युक्ष्य विलापितमनुत्पूतमाज्यं पात्रे गृहीत्वाऽन्नमग्नावधिश्रित्याभिघार्योद्वास्याग्नेः पश्चाद्दर्भेष्वासाद्याग्निमभ्यर्च्य पञ्चदशदारुकमिध्ममेकां समिधं वा तूष्णीमग्नावाधाय मेक्षणे स्रुवेणोपस्तीर्य चरोरुत्तरभागस्य मध्यात्पूर्वार्धाच्चाङ्गुष्ठपर्वमात्रं मेक्षणेनैव द्विरवदाय पञ्चावत्ती तु पश्चार्धात्तृतीयमवदाय पात्रस्थमवत्तं चाभिघार्य सोमाय पितृमते स्वधा नम इति पितृतीर्थेन दक्षिणभागे हुत्वा सोमाय पितृमत इदं न ममेति त्यजेत् । पुनः पूर्ववद्दक्षिणभागचरोरवदायाग्नये कव्यवाहनाय स्वधा नम इति उत्तरभागे हुत्वा, अग्नये कव्यवाहनायेदं न ममेति त्यक्त्वा तूष्णीं मेक्षणमनुप्रहरेत । होमे प्राचीनावीतित्वे प्राचीनावीतिनैव मेक्षणानुप्रहरणम् । यज्ञोपवीतित्वे यज्ञोपवीतिनैवेति वृत्तिकृत् । उभयत्रापि यज्ञोपवीतिनैवेति प्रयोगरत्ने चन्द्रिकायां च । अस्मिन्पक्षे पिण्डनिपरणमग्निसमीपे ।

इति पार्वणश्राद्धम् । अष्टकाश्राद्धमाघ्यावर्षश्राद्धमासिमासिश्राद्धानामेकोद्दिष्टस्य च प्रयोगः प्रयोगरत्नेऽवगन्तव्यः ।

अथ काम्यश्राद्धम् । तत्र कृष्णपक्षे पुत्रकामेण पञ्चम्यां पार्वणश्राद्धवत्षड्दैवत्यं सपिण्डं पाणिहोमविधिना कार्यम् । तत्र धूरिलोचनसंज्ञका विश्वे देवाः । अपि कन्यागते सूर्ये काम्ये च धूरिलोचनाविरयुक्तत्वात् । मासिश्राद्धस्य पार्वणस्य चैककार्यत्वादन्यतरेणैवालम् । तत्र मासि श्राद्धं कृतवांश्चेत्पर्वणि केवलं पिण्डपितृयज्ञः कार्य एव । काम्यश्राद्धं कृतं चेत्तेनैवालं न पुनर्मासिश्राद्धपार्वणश्राद्धे कार्ये इति वृत्तिकृत् ।

अथ शौनकोक्तं काम्यश्राद्धमुच्यते ।

काम्यश्राद्धमहं वक्ष्ये शौनकस्त्वृषिसत्तम इत्युपक्रम्य
पार्वणेन विधानेन श्राद्धं कुर्यात्समाहितः ।
तिलार्थं तु यवैः कार्यं वृद्धिश्राद्धवदिष्यते ॥
प्रोष्ठपद्यपरे पक्षे पञ्चम्यामाहरेत्सुधीः ।

---

१ क. ग. °क्षेऽग्निरि° । २ क ग विप्राणामुत° ।

इत्युक्तत्वाद्भाद्रकृष्णपञ्चम्यां वृद्धिश्राद्धवद्भवति वृद्धिश्राद्धं त्वग्रे वक्ष्यामः । अथ शास्त्रान्तरोक्तानि काम्यश्राद्धान्युच्यन्ते । तत्र तिथिश्राद्धान्याह पराशरमाधवीये मनुः—

कुर्वन्प्रतिपदि श्राद्धं सुरूपान्विन्दते सुतान् ।
कन्यकां तु द्वितीयायां तृतीयायां तु बन्दिनः ॥
पशून्क्षुद्रांश्चतुर्थ्यां तु पञ्चम्यां शोभनान्सुतान् ।
षष्ठ्यां द्यूतं कृषिं चैव सप्तम्यां लभते नरः ॥
अष्टम्यामपि वाणिज्यं लभते श्राद्धदः सदा ॥
स्यान्नवम्यामेकखुरं दशम्यां द्विखुरं बहु ।
एकादश्यां तथा रूप्यं ब्रह्मवर्चस्विनः सुतान् ॥
द्वादश्यां जातरूपं तु रजतं रूप्यमेव च ।
ज्ञातिश्रैष्ठ्यं त्रयोदश्यां चतुर्दश्यामुरुप्रजाः ॥
*प्रीयन्ते पितरश्चास्य ये शस्त्रेण रणे हताः ।*
श्राद्धदः पञ्चदश्यां तु सर्वान्कामान्समश्नुते ॥ इति ।

एतानि श्राद्धानि सर्वेष्वेवापरपक्षेषु प्रतिपदादितिथिषु भवन्तीति माधवः । आपस्तम्बोऽपि—सर्वेष्वेवापरपक्षस्याहःसु क्रियमाणे पितॄन्प्रीणाति कर्तुस्तु कालनियमात्फलविशेष इति । अथ वारश्राद्धानि । तान्युक्तानि कूर्मपुराणे—

आदित्यवारे चाऽऽरोग्यं चन्द्रे सौभाग्यमेव च ।
कुजे सर्वत्र विजयं सर्वान्कामान्बुधे तथा ॥
विद्यां विशिष्टां च गुरौ धनं वै भार्गवे पुनः ।
*शनैश्चरे भवेदायुरारोग्यं च सुदुर्लभम् ॥ इति ।*

निर्णयसिन्धौ—यवादिकरणेष्वेतच्छ्राद्धफलमते फलमित्युक्तत्वाद्यत्सूर्यादिवारफलं तदेव यवादिकरणश्राद्धेष्वपि योजनीयम् । एतानि श्राद्धानि सर्वेषु मासेषु शुक्लकृष्णपक्षेषु भवन्ति । आदित्यादिदिनेष्वेवं श्राद्धं कुर्वन्सदा नर इति विष्णुधर्मोत्तर उक्तत्वात् । सततमादित्येऽह्नि श्राद्धं कुर्वन्नारोग्यमाप्नोतीति विष्णूक्तेश्च । श्राद्धे कृष्णपक्षस्य संस्तवाद्परपक्षे पित्र्याणीति सुदर्शनभाष्याच्च सकृत्करणे कृष्णपक्षे कर्तव्यत्वं युक्तम् ।

---

अथ नक्षत्रश्राद्धानि । तान्याह मार्कण्डेयः—

कृत्तिकासु पितॄनर्चन्स्वर्गमाप्नोति मानवः ।
अपत्यकामो रोहिण्यां सौम्ये त्वोजस्वितां लभेत् ॥
आर्द्रायां शौर्यमाप्नोति क्षेत्रादीनि पुनर्वसौ ।
पुष्टिं पुष्ये पितॄनर्चन्नाश्लेषासु वरान्सुतान् ॥
मघासु स्वजनश्रैष्ठ्यं सौभाग्यं फल्गुनीषु च ।
प्रदानशीलो भवति सापत्यश्चोत्तरासु च ॥
प्राप्नोति ज्येष्ठतां सत्सु हस्ते श्राद्धप्रदो नरः ।
रूपवन्ति च चित्रासु तथाऽपत्यान्यवाप्नुयात् ॥
वाणिज्यलाभदा स्वाती विशाखा पुत्रकामदा ।
कुर्वतां चानुराधाश्च दद्युश्चक्रप्रवर्तनम् ॥
ज्येष्ठास्वर्थाधिपत्यं च मूले चाऽऽरोग्यमुत्तमम् ।
आषाढासु यशःप्राप्तिरुत्तरासु विशोकता ॥
श्रवणे च शुभाँल्लोकान्धनिष्ठासु धनं महत् ।
वेदश्रैष्ठ्यं चाभिजिति भिषक्सिद्धिं च वारुणे ॥
अजाविकं प्रौष्ठपदे विन्देद्भार्यां तथोत्तरे ।
रेवतीषु तथा रौप्यमश्विनीषु तुरंगमान् ॥
श्राद्धं कुर्वंस्तथाऽऽप्नोति भरणीष्वायुरुत्तमम् ।
तस्मात्काम्यानि कुर्वीत ऋक्षेष्वेतेषु तत्त्ववित् ॥ इति ।

चक्रप्रवर्तनं सर्वत्राऽऽज्ञायाः प्रतिघाताभावेन प्रवर्तनमिति माधवः । मरीचिः—

कृत्तिकादिषु ऋक्षेषु श्राद्धे यत्फलमीरितम् ।
विष्कम्भादिषु योगेषु तदेव फलमिष्यते ॥

नक्षत्रादिश्राद्धान्यपि सार्वकालिकानि । एतेषामेव तिथ्यादिश्राद्धानां फलान्तराण्यपि माधवीयादिग्रन्थेभ्यो ज्ञेयानि । अत्र पिण्डरहितानि श्राद्धान्युच्यन्ते रामकौतुके—

नन्दाश्वकामरव्यारभृग्वग्निपितृकालभे ।
गण्डे वैधृतिपाते च पिण्डास्त्याज्याः सुतेप्सुभिः ॥

नन्दाः प्रतिपत्षष्ठ्येकादश्यः । अश्वः सप्तमी । कामस्त्रयोदशी ।

---

१ ग. °न्स्वर्ग प्राप्नो° ।

रविः सूर्यः। आरो भौमः। भृगुः शुक्रः। अग्निभं कृत्तिका। पित्र्यभं मघा। कालभं भरणी। पौर्णमासीषु पिण्डदानं निषिद्धमिति सिन्धौ। एतेष्वेव काम्यश्राद्धेष्वयं निषधः।

> तिथिवारभयुक्तो यो दोषो वै समुदाहृतः।
> स श्राद्धे तन्निमित्ते स्यान्नान्यश्राद्धे कदाचन॥

इति विश्वरूपनिबन्धोक्तेः। पृथ्वीचन्द्रोदये नारदोऽपि—

> सकृन्महालये काम्ये पुनः श्राद्धेऽखिलेषु च।
> अतीतविषये चैव सर्वमेतद्विचिन्तयेत्॥ इति।

यत्र पिण्डदाननिषेधस्तत्र सांकल्पिकविधिः। तदाह निर्णयसिन्धौ छागलेयः—

> पिण्डो यत्र निवर्तेत मघादिषु कथंचन।
> सांकल्पं तु तदा कार्यं नियमाद्ब्रह्मवादिभिः॥ इति।

सांकल्पिकश्राद्धविधिस्त्वग्रे वक्ष्यते। अत्रापि सर्वेषु श्राद्धेषु धूरिलोचनसंज्ञका विश्वे देवाः। पितरस्तु सपत्नीकाः। पित्राद्यस्त्रयः सपत्नीका मातामहादयश्च त्रयः। एवं षट्। संकल्पेऽस्मत्पितृपितामहप्रपितामहानाममुकशर्मणाममुकगोत्राणां वसुरुद्रादित्यस्वरूपाणां सपत्नीकानामस्मन्मातामहमातुःपितामहमातुःप्रपितामहानाममुकशर्मणाममुकगोत्राणां वसुरुद्रादित्यस्वरूपाणां सपत्नीकानामेतेषां तृप्त्यर्थं पुत्रकामः प्रतिपच्छ्राद्धं सांकल्पिकविधिना सदैवमन्नेन हविषा श्वः सद्यो वा करिष्ये। द्वितीयायां तु एतेषां तृप्त्यर्थं कन्याकामो द्वितीयाश्राद्धं सदैवं सपिण्डं पार्वणेन विधिनाऽन्नेन हविषा श्वः सद्यो वा करिष्ये। एवं तत्तच्छ्राद्धे तत्तत्कामोल्लेखः। अन्यत्सर्वं दर्शश्राद्धवत्। प्रतिपत्षष्ठीसप्तम्येकादशीत्रयोदशीपौर्णमासीश्राद्धानि सांकल्पविधिना कार्याणि। अन्यानि पिण्डसहितानि पार्वणवत्। चतुर्दशीश्राद्धे विशेष उच्यते।

> युवानः पितरो यस्य मृताः शस्त्रेण वा हताः।
> तेन कार्यं चतुर्दश्यां तेषां तृप्तिमभीप्सुना॥

इति मार्कण्डेयपुराणाद्येषां युवानः पितरः शस्त्रहता वा मृतास्तैरेव कर्तव्यम्।

> प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम्।
> शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयते॥

इति याज्ञवल्क्योक्तेश्च । यानि तु अपमृत्युर्भवेद्येषामित्यादिवचनानि तानि महालयान्तर्गतचतुर्दशीश्राद्धपराणि । तत्प्रकरणे पठितत्वात् । इदं चैकोद्दिष्टमेव कार्यं न पार्वणम् ।

चतुर्दश्यां तु यच्छ्राद्धं सपिण्डीकरणात्परम् ।
एकोद्दिष्टविधानेन तत्कार्यं शस्त्रघातिनः ॥

इति गार्ग्यवचनात् । पित्रादित्रिके द्वयोः शस्त्रादिमृतयोरेकोद्दिष्टद्वितयं त्रयाणामपि तथात्वे एकोद्दिष्टत्रयं कार्यमिति चन्द्रिकायाम् । अथवा त्रयाणां शस्त्रमृतौ पार्वणमेव ।

पित्रादयस्त्रयो यस्य शस्त्रघातात्त्वनुक्रमात् ।
स मृते पार्वणं कुर्याद्दाविकानि पृथक्पृथक् ॥

इति मदनरत्ने पराशरस्मृतेः। मम तु अशस्त्रमृतानामपि कामनायां सत्यां पार्वणविधिना चतुर्दशीश्राद्धं कर्तव्यमिति प्रतिभाति । चतुर्दश्यामुरुप्रजाः इति मनुवचसो वैयर्थ्यापत्तेः । यत्तु वर्जयित्वा चतुर्दशीमिति याज्ञवल्क्यवचनं तत्कामाभावे योजनीयमित्यविरोध इति । एकोद्दिष्टश्राद्धविधिस्त्वग्रे वक्ष्यते। रविभौमशुक्रवारश्राद्धानि सांकल्पिकानि अन्यानि सपिण्डकानि । नक्षत्रश्राद्धेषु कृत्तिकामघाभरणीश्राद्धानि सांकल्पिकानि । अन्यानि सपिण्डकानि । अभिजिच्छ्राद्धं तूत्तराषाढान्तिमपादश्रवणाद्यघटिकाचतुष्टयात्मकस्य ज्योतिःशास्त्रप्रसिद्धस्याभिजिन्नक्षत्रस्य यस्मिन्दिनेऽपराह्ले योगस्तस्मिन्दिने कार्यम् । योगेषु गण्डव्यतीपातवैधृतिश्राद्धानि सांकल्पिकान्यन्यानि सपिण्डकानि। नक्षत्रयोगाणां ह्रासवृद्धित्वे तिथिवन्निर्णयः । करणानां तु यस्मिन्दिने यत्करणमपराह्ले संभवति तस्मिन्दिने तत्करणश्राद्धम् । अन्यथा रात्रौ श्राद्धप्रसङ्गः स्यात् । श्राद्धसंपातनिर्णयं त्वग्रे वक्ष्यामः । अथैषां तर्पणनिर्णयः । मघाभरण्योः श्राद्धे श्राद्धोत्तरं तत्काल एव तिलतर्पणं कृत्वा काले वैश्वदेवादि कृत्वा भुञ्जीत । अन्येषु श्राद्धात्पूर्वं दर्शश्राद्धवद्विशेषवचनाभावात् । वैधृतिव्यतीपातश्राद्धयोर्ब्रह्मचर्यादिनियमा न सन्ति । व्यतीपातादिके श्राद्धे नियमान्परिवर्जयेदितिवचनात् ।

इति श्रीमच्चित्तपावनके० श्राद्धमञ्जर्यां काम्यश्राद्धप्रयोगः समाप्तः ।

---

१ क ख 'मृतावेशौ । २ ग 'सनिशा° । ३ ग. °त्समेव ।

अथ वृद्धिश्राद्धमुच्यते। तच्च गर्भाधानादिषु संस्कारेषु जातकर्मादिष्वपत्यसंस्कारेषु श्रवणाकर्मादिषु वापीकूपतडागादिषु देवताप्रतिष्ठायां वानप्रस्थाश्रमे संन्यासस्वीकारे तुलापुरुषादिमहादानादौ नववास्तुप्रवेशे व्रतोद्यापनादिषु राजाभिषेके महानाम्न्यादिवेदव्रतेषु प्रथमोपाकर्मोत्सर्जनयोः सर्वेषु शान्तिकपौष्टिकेषु अग्न्याधानादिषु श्रौतकर्मसु च कार्यम्। तच्च पार्वणत्रयात्मकम्। आदौ मातृपार्वणम्। ततः पितृपार्वणम्। ततः सपत्नीकमातामहपार्वणम्। तत्कालः—कर्माहात्पूर्वेद्युर्मातृपार्वणश्राद्धम्। तच्च देवरहितमेव। कर्माहे देवपूर्वकं पितृपार्वणश्राद्धम्। कर्मोत्तराहे देवपूर्वकं सपत्नीकमातामहपार्वणश्राद्धम्। अस्यासंभवे पूर्वेद्युरेव पूर्वाह्णे मातृकम्। मध्याह्ने पैतृकम्। अपराह्णे मातामहानाम्। अस्याप्यसंभवे पूर्वेद्युरेव पूर्वाह्णे सर्वेषां देवपूर्वकं तन्त्रेणानुष्ठानम्। अत्र पूर्वाह्णशब्दः सार्धप्रहरवाचकः। महत्सु कर्मसु पूर्वेद्युरन्येषु तु कर्माह एवेति प्रयोगरत्ने। पुत्रजन्मनि तु दिने वा रात्रौ वा पुत्रजन्मानन्तरमेव कार्यम्। आधानाङ्गं[1] नान्दीश्राद्धं त्वपराह्ण एव। आग्निकं त्वपराह्णत इति विष्णूक्तेः। अस्य कालैक्यत्वात्तन्त्रेणैवानुष्ठानं युक्तमिति प्रतिभाति। अत्र विश्वे देवाः सत्यवसुसंज्ञकाः। इष्टिश्राद्धे कर्माङ्गश्राद्धे च क्रतुदक्षसंज्ञकाः। इष्टिश्राद्धलक्षणं श्राद्धचन्द्रिकायाम्—इष्टिश्राद्धमाधानसोमयागादौ क्रियमाणं वृद्धिश्राद्धमिति। कर्माङ्गश्राद्धलक्षणमपि तत्रैव—

> निषेककाले सोमे च सीमन्तोन्नयने तथा।
> ज्ञेयं पुंसवने चैव श्राद्धं कर्माङ्गमुच्यते॥ इति।

इष्टिश्राद्धं कर्माङ्गश्राद्धमिति कौस्तुभे। आधानाङ्गश्राद्धे सत्यवसू इति केचित्। ब्राह्मणास्तु वैश्वदेवस्थाने द्वौ। मात्रादिस्थाने प्रत्येकं द्वौ द्वौ। एवं विंशतिः। वैश्वदेवस्थाने चत्वार इति केचित्। अथवा वैश्वदेवस्थाने द्वौ। मात्रादिपार्वणत्रये प्रतिपार्वणं द्वौ द्वौ। एवमष्टौ। कौस्तुभे तु अत्यशक्तौ देवस्थान एकः। मात्रादिपार्वणत्रये त्रयः। एवं चत्वार इत्युक्तम्। विप्रचरणक्षालनकाले यद्यतिथिः समागतश्चत्तमपि सर्वपितृस्थाने विनियोज्य स्वागतादिविधिना भोजयेत्। मातृपार्वणे विप्राभावे श्राद्धार्हसुवासिन्योऽपि भोज्याः सर्वं पितृकर्मापि यज्ञोपवीतिनैव कार्यम्। न सव्यजानुनिपातनम्। प्रदक्षिणमुपचारः। तिलस्थाने यवा एव। तिलोदककार्यं यवोदकेन। पूजोपचाराणां देवतीर्थेन

---

१ ग 'ङ्गकादि'। २ ग 'त्ते। अत पु'।

द्विर्द्विर्दानम् । गन्धदानं तु मध्यमाङ्गुल्याऽनामिकया वा । कर्तुः प्राङ्मुखतोदङ्मुखता वा । कर्मणोऽपि प्रागपवर्गतोदगपवर्गता वा । स्वधाशब्दस्थाने स्वाहाशब्दः । न नामग्रहणम् । नास्मद्गोत्रवसुरूपादिशब्दाः । नामगोत्रादिनिषेधस्तु सपिण्डकश्राद्धे न भवतीति निर्णयसिन्धौ । संस्कारकर्माङ्गनान्दीश्राद्धे दर्भस्थाने दूर्वाः । आधानसोमाद्यङ्गभूते तु दर्भा एव । तेऽप्यमूलाः । हरितदर्भा इति केचित् । नात्र पुष्पमालारक्तगन्धादिनिषेधः । पुष्पाणि तु मालतीशतपत्रीमल्लिकाकुब्जकेतकीपाटलानि प्रशस्तानि । मालाश्चैतेषामेव पुष्पाणाम् । चतुरस्राण्येव सर्वाणि मण्डलानि । सौवर्णान्येव सर्वाणि भोजनपात्राणि । अलाभे मधूकपलाशग्राम्यकदल्याद्यन्यतमपत्राणि । अन्नानि तु मोदकमाङ्गलिकपक्वान्नभक्ष्यभोज्यपायसाज्यगुडमिश्रौदनादिमधुरद्रव्यसहितानि । आम्लकटुकमाषान्नादिद्रव्याणि निषिद्धानि । श्राद्धदिनकृत्यमाह निर्णयसिन्धौ पराशरः—

सुवेषभूषणैस्तत्र सालंकारैस्तथा नरैः ।
कुङ्कुमाद्यनुलिप्ताङ्गैर्भाव्यं तु ब्राह्मणैः सह ॥
स्त्रियोऽपि स्युस्तथाभूता गीतनृत्यादिहर्षिताः ॥ इति ।

वृद्धिश्राद्धे पिण्डदानं कृताकृतम् । कुलदेशाचारतो व्यवस्थेति प्रयोगरत्ने । साग्निकस्य तु पिण्डदानं नियतमेव ।

अग्नौ तु विद्यमाने यो वृद्धौ पिण्डान्न निर्वपेत् ।
पतन्ति पितरस्तस्य नरके स तु पच्यते ॥

इति ब्रह्मपुराणात् । अस्मिन्नान्दीश्राद्धे सर्वत्र देवशब्देषु तत्तद्विभक्त्या नान्दीमुखपूर्वकोल्लेखः कर्तव्यः । नान्दीमुखाः सत्यवसुसंज्ञका विश्वे देवा इत्यादि । अथवा देवशब्दोत्तरं नान्दीमुखशब्दः प्रयोक्तव्यः । सत्यवसुसंज्ञका विश्वे देवा नान्दीमुखा इत्यादि । एवमेव पितृशब्देषु च । तदुक्तं श्राद्धचन्द्रिकायाम्—

एकैको मन्त्रवत्पिण्डो देयस्तूष्णीमथापरः ।
सर्वमन्त्रेषु कर्तव्यं नान्दीमुखविशेषणम् ॥ इति ।

निर्णयसिन्धौ वृद्धपराशरः—

नान्दीमुखेभ्यो देवेभ्यः प्रदक्षिणकुशासनम् ।
पितृभ्यस्तन्मुखेभ्यश्च प्रदक्षिणमिति स्थितिः ॥

इत्यादिवाक्येषु नान्दीमुखविशेषणपूर्वकदेवपितृशब्दोच्चारणदर्शनात् । नान्दीमुखपितृलक्षणं गृह्यकारिकाभाष्ये—अत्र पूर्वोक्तमात्रादिमनुष्यपितॄनूर्ध्वमुखादिव्यपितृविशेषणकान्कृत्वा तद्भेदेनार्चयेदिति हेमाद्रिणा प्रपञ्चितम् । तत्रत्यवचनम्—ऊर्ध्ववक्त्रास्तु ये तत्र ते नान्दीमुखसंज्ञिता इति । एते दिव्यपितरः । मात्रादयश्च मनुष्यपितरः प्राधान्येनोद्देश्याः । नान्दीमुखत्वं च तद्भेदं दृष्ट्वा मात्रादीनां सिद्धम् । अतोऽत्र नान्दीमुखानां पितॄणामिदमासनमित्यादिकात्यायनीयप्रयोगवचनं सिद्धमिति । हिरण्यकेशीयसंस्काररत्नमालायामप्येवमेव प्रयोगः । अतो मन्त्रान्तर्गतेषु पितृशब्देष्वपि नान्दीमुखपूर्वकोल्लेखो युक्तः । तत्रैवं व्यवस्था मनो न्वाहुवामह इत्यादीनामाचार्योक्तानामृचां यथार्थमेव पाठः । तस्मादृचं नोहेदित्युक्तत्वात् । तत्र पितृशब्दोच्चारणकाले नान्दीमुखध्यानमात्रम् । शाखान्तरमाप्तानां स्वधाशब्दपितृपदघटितानामृचां लोप एव । शाखान्तरोक्तमन्त्रत्यागे प्रत्यवायाभावात् । स्वाविरुद्धमन्यतो ग्राह्यमिति च स्मरणात् । सौत्रमन्त्रेषु ऋग्भिन्नेषु तु भवत्येवोहः । सर्वेषु यजुर्निगदेषु प्रकृतौ समर्थनिगमेष्विति वचनात् । अथवा सौत्रमन्त्रा यवोऽसि सोमदेवत्य इत्यादयो ये परिशिष्टादावूहितास्त एव तथैव पठनीयाः । अन्ये तु यथापाठमेव । पिण्डानुमन्त्रणादि पूर्ववदिति वृत्तिकृदुक्तेः । अत्र संकल्पे विशेषो निर्णयसिन्धौ—

शुभार्थी प्रथमान्तेन वृद्धौ संकल्पमाचरेत् ।
न षष्ठ्या यदि वा कुर्यान्महादोषोऽभिजायते ॥ इति ।

अयं नियमः संकल्प एव । आसनादौ तु दर्शश्राद्धवत्तत्तद्विभक्त्योल्लेखः । विप्रनिमन्त्रणे द्वौ द्वौ विप्रौ युगपन्निमन्त्रयेदिति कमलाकरः । इदं द्वितीयादिनिमन्त्रणपरम् । प्रथमं तु ब्राह्मणगृहे कर्तव्यत्वेन विहितत्वाद्युगपत्कर्तुमशक्यत्वात्पृथगेवेति प्रतिभाति । सति संभवे युगपन्निमन्त्रयेदिति । सर्वान्विप्रान्प्राङ्मुखानुपवेश्य स्वयमुदङ्मुखो भूत्वाऽर्चयेत् । यदि स्थलसंकोचादिनोदङ्मुखा विप्राः स्युस्तदा स्वयं प्राङ्मुखो भूत्वाऽर्चयेत् । अत्र वामकटिप्रदेशे नीवीबन्ध इति प्रागेवोक्तम् । सर्वविप्रासनेषु दूर्वा दर्भा वा दक्षिणभाग ऋजवः प्रागग्रा देयाः । आवहनमपि सर्वत्र दक्षिणाङ्गादिक्रमेण पादादिशिरोन्तम् । सदा परिचरेद्भक्त्या पितॄनप्यत्र देववदिति श्राद्धमयूखे

१ क ख °न प्रोषित° । २ क. ख 'मसंभवात्तु° ।

कात्यायनोक्तेः। दैवेऽर्घ्यपात्रद्वयमिति शौनकः । जयन्तमत एकमेवार्घ्यपात्रमासाद्य प्रथमविप्रकराग्रं द्वितीयविप्रकरे संस्थाप्य कराग्रेण पवित्राग्रं तेन धारयित्वा सकृन्मन्त्रेण तन्त्रेणैवार्घ्यं दद्यात्। आश्वलायनानामर्घ्यरहितस्य देवार्चनस्य केषांचिदुक्तिसत्त्वेऽपि वृद्धिश्राद्धे दैवेऽप्यर्घ्यं दद्यात्। दैवेभ्योऽपि पृथग्दद्यादिहार्घ्यं स्मृतिचोदनादिति शौनकोक्तेः। पित्र्ये तु जयन्तमते प्रतिवर्गमेकैकमर्घ्यपात्रं संस्थाप्यैकैकमर्घ्यं विगृह्य द्वाभ्यां द्वाभ्यां दद्यात्। मन्त्रास्तु नान्दीमुखे मातरिदं तेऽर्घ्यमित्याद्येकवचनान्ता इति । गृह्यपरिशिष्टकारिकावृत्त्यनुसारेणार्घ्यदानविधिस्तु प्रयोगे वक्ष्यते । विंशतिब्राह्मणपक्षे प्रतिवर्गं त्रीणि त्रीणि पात्राण्यासाद्य मात्रादीनां तत्तदर्घ्यं तत्तद्ब्राह्मणाभ्यां सकृत्सकृन्निवेद्य प्रतिब्राह्मणं मन्त्रावृत्त्यैकैकमर्घ्यं विगृह्य द्वाभ्यां द्वाभ्यां दद्यात्। प्रथमविप्रकराग्रं द्वितीयविप्रकरे संस्थाप्य सकृदर्घ्यदानमिति कश्चित्। अत्रार्घ्यपात्रं नाधोमुखं कुर्यादिति सिन्धौ । अत्र विप्रपाणावेवाग्नौकरणमिति वृत्तिकृत्। अग्नये कव्यवाहनाय स्वाहा। सोमाय पितृमते स्वाहेति होममन्त्राविति स एव।

शौनकोऽपि—अत्र स्वधानमःशब्दस्थाने स्वाहेत्युदीरयेत्।

कारिकायां च—अग्नये कव्यवाहादिमन्त्रेण प्रथमाहुतिः।

सोमायेति द्वितीया स्यात्तथाऽन्येषां च पाणिषु ॥
आभ्यामेव तु मन्त्राभ्यां द्वे द्वे हुत्वाऽऽहुती इह ।
एकैकामाहुतिं केचिद्विगृह्यैव प्रजुह्वति ॥

निर्णयसिन्धौ—अतो देवा इत्यङ्गुष्ठग्रहणम्।

मधु मध्विति यस्तत्र त्रिर्जपोऽशितुमिच्छताम् ।
गायत्र्यनन्तरं सोऽत्र मधुमन्त्रविवर्जितः ॥
न चाश्नत्सु जपेदत्र कदाचित्पितृसूक्तकम् ।
पठेच्छकुनिसूक्तं तु स्वस्तिसूक्तं शुभं तथा ॥

पावमानीः शंवतीरैन्द्रीरप्रतिरथं च श्रावयेदिति ।

शौनकः—तृप्तानथ द्विजाञ्ज्ञात्वा मधु वाता ऋतायते ।
इत्यादिकतृचस्थाने उपास्मै गायता नरः ॥
पञ्चर्चमक्षन्नित्येकामृचं चेति यथाक्रमम् ।
श्रावयित्वा तु संपन्नमिति पृच्छेद्द्विजानथ ॥

तेऽपि संपन्नमित्येवं ब्रूयुस्तृप्तिसमन्विताः ।
*प्रकीर्यान्नं तु तेष्वग्रे विमानाचामयेत्ततः ॥ इति ।*

एतन्मते वृद्धिश्राद्धे पिण्डदानात्पूर्वमेव प्रकिरणम् ।

यत्तु—आमश्राद्धे च वृद्धौ च प्रेतश्राद्धे तथैव च ।
विकिरं नैव कुर्वीत मुनिः कात्यायनोऽब्रवीत् ॥

इति वचनं तच्छाखान्तरविषयम् । चन्द्रिकायां वसिष्ठः—तृप्तिप्रश्ने तु संपन्नं दैवे रुचितमित्यपि । रुचिरामिति क्वचित्पाठः । सुसंपन्नमिति प्रोक्ते शेषमन्नं निवेदयेदिति सिन्धौ । क्षिप्रमुच्छिष्टमार्जनमिति ब्रह्माण्डे । कारिकायां च—

संपन्नवचनादि स्यादाचान्तेषु द्विजन्मसु ।
अथ भुक्ताशयान्सम्यग्गोमयेनोपलेपयेत् ॥
*तत्र प्रागग्रकान्दर्भानास्तृणाति ततः परम् ।*

आदिशब्देन प्रकिरणं गृह्यते । एतस्मिन्नेव काले द्विजोच्छिष्टापनयनविधानात्प्रकिरणस्योच्छिष्टसंबन्धादत्रैव प्रकिरणं युक्तमिति सिद्धम् । श्रावयित्वा च पृष्ट्वा च देवानां विकिरं चरेदित्याश्वलायनस्मृतिवचनाच्च । द्विजोच्छिष्टस्थानं गोमयेनोपलिप्य तत्रैव पिण्डदानं कार्यमिति कारिकाकारस्याऽऽशयः । वृत्तिकृतोऽपि तथैव । भोजनशालाया बहिः पिण्डदानं न तूच्छिष्टसमीप इति मयूख उक्तं तच्छाखान्तरीयाणामेव ।

कारिकायाम्—

पृषदाज्येन संमिश्रं भुक्तशेषोद्धृतं भवेत् ।
एकैकस्योक्तमन्त्रेण द्वौ द्वौ पिण्डौ तु निर्वपेत् ॥

पृषदाज्यलक्षणमपि तत्रैव—पृषदाज्यं च कुर्वीत दध्यानयति सर्पिषि । इति ।

ब्राह्मे—शाल्यन्नं दधिमध्वक्तं बदराणि यवांस्तथा ।
मिश्रीकृत्वा तु चतुरः पिण्डाञ्श्रीफलसंनिभान् ॥ इति ।

चतुर्विंशतिमते—

द्वौ द्वौ चाभ्युदये पिण्डावेकैकस्मै विनिक्षिपेत् ।
एकं नाम्ना परं तूष्णीं दद्यात्पिण्डान्पृथक्पृथक् ॥ इति ।

एकैकस्मै मन्त्रावृत्त्या द्वौ द्वौ पिण्डाविति वृत्तिकृत् । मन्त्रस्तु प्राकृत एव । नान्दीमुखेभ्यः पितृभ्यः स्वाहेति वा । पिण्डानुमन्त्रणादि कृताकृतम् । अथानुमन्त्रणादि स्यात्तत्तु नेच्छन्ति केचनेति कारिकोक्तेः ।

---

१ क ख °मात° ।

ब्रह्मपुराणे–अथाक्षय्योदकस्थाने दत्त्वा क्षीरं यवोदकम्। इति।
अक्षय्यस्थाने नान्दीमुखाः पितरः प्रीयन्तामिति कमलाकरः।

ब्राह्मे—द्राक्षामलकमूलानि यवांश्च विनियोजयेत्।
तान्येव दक्षिणार्थं तु दद्याद्विप्रेषु सर्वदा॥ इति।

स्वधां वाचयिष्ये इत्यस्य स्थाने नान्दीमुखान्पितॄन्वाचयिष्ये इति कमलाकरोक्तिः।

कात्यायनः–स्वमूपुवाजिनमिति विप्रांश्चैव विसर्जयेत्।

ॐ स्वधोच्यतामित्यस्य स्थाने ॐ संपन्नमिति वृत्तिकृत्। ततः श्राद्धशेषं समाप्य माता पितामही चैवेति श्लोकद्वयं पठेत्। तत्तत्पार्वणाद्यजीवनवशेन यस्य कस्यचित्पार्वणस्य लोपे तत्तत्पार्वणविषयकश्लोकैकदेशस्य लोपः। केवलमातृपार्वणश्राद्धकरणपक्ष एता भवन्त्वित्यूहः। अत्र श्राद्धाङ्गतर्पणं नेति निर्णयसिन्धौ। केचित्केवलजलेनैव नान्दीमुखां मातरं तर्पयामीत्येवं तर्पणं कार्यमित्याहुः। अस्मिञ्श्राद्ध आद्यावन्ते वा वैश्वदेवः कर्तव्यः। आदौ करणपक्षे विप्रनिमन्त्रणानन्तरं तत्पूर्वं वा भिन्नपाकेन। बह्वृचानां तु श्राद्धान्ते श्राद्धशेषेण वैश्वदेवः। साग्नेनिरग्नेश्च समानमेवेति कमलाकरः। अत्र कर्तुर्भोक्तुश्च ब्रह्मचर्यादिनियमा न सन्ति। तदुक्तं धर्मप्रदीपे—

आमे हेमे तथा नित्ये नान्दीश्राद्धे तथैव च।
व्यतीपातादिके श्राद्धे नियमान्परिवर्जयेत्॥ इति।

एतच्च नान्दीश्राद्धं मातृपूजापूर्वकं कार्यम्। मातरस्तु द्विविधाः—मानुष्यो दैव्यश्च। तत्र मानुष्यो मातृपितामहीप्रपितामहीमातामहीमातुःपितामहीमातुःप्रपितामहीपितृष्वसृमातृष्वसारः इत्यष्टौ। आसां जीवने प्रत्यक्षपूजनम्। मृतानां त्वक्षतपुञ्जेष्विति हेमाद्रिः। दैव्यस्तु गौर्याद्याः षोडश ब्राह्म्याद्याश्च सप्तेत्येवं त्रयोविंशतिः। एता दुर्गां क्षेत्रपालं गणाधिपं च पूजयेत्। गौर्याद्याश्चतुर्दशेति केचिद्वदन्ति तत्पक्षे मातरो लोकमातर इति सर्वविशेषणम्। षोडशपक्षे देवतान्तरम्। कौस्तुभे तु ब्राह्म्याद्या महालक्ष्म्या सहाष्टावित्युक्तम्। प्रयोगरत्नादौ कातीयगृह्याद्यनुसारेण वसोर्धारापूजनमायुष्यसूक्तजपश्च विहितः। स तच्छाखीयानां नियतः। अन्येषां त्वनियतः। करणे त्वभ्यु-

१ ग. °वरः। क°। २ ग °पेणे°।

दय इति कमलाकरः । कौस्तुभेऽप्येवमेव । एतेषु पक्षेषु यथाऽऽचारस्तथा कर्तव्यम् । मातृकापूजनानन्तरं मातृकाप्रीतये युग्मान्ब्राह्मणान्भोजयेत् । आमान्नानि वा दद्यात् । नान्दीश्राद्धब्राह्मणभोजनेन सह वा ब्राह्मणभोजनम् । प्रयोगरत्न आमश्राद्धप्रयोगे तथैव दर्शनात् । अपि वा पूजैव कार्या ।

पुष्पैर्धूपैः सनैवेद्यैर्गन्धाद्यैर्भूषणैरपि ।
पूजयित्वा मातृगणं कुर्याच्छ्राद्धत्रयं बुधः ॥

इति कौर्मोक्तेः । यत्र प्रधानकर्माङ्गत्वेन पुण्याहवाचनं नान्दीश्राद्धं च विहितं तत्र गणपतिपूजनपूर्वकं पुण्याहवाचनं कृत्वा मातृकापूजनपूर्वकं नान्दीश्राद्धं कुर्यात् । यत्र तु बौधायनेन श्रौतकर्माङ्गत्वेन कर्माहात्पूर्वेद्युर्नान्दीश्राद्धमेव विहितं तत्र नान्दीश्राद्धाङ्गत्वेन पुण्याहवाचनं कृत्वा मातृकापूजनपूर्वकं नान्दीश्राद्धं कुर्यात् । केचित्पुण्याहवाचनं विनैव मातृकापूजनपूर्वकं नान्दीश्राद्धमेव कुर्वन्ति । श्राद्धत्रयकरणपक्षेऽपि सकृदादौ मातृकाः संपूज्य श्राद्धत्रयान्ते विसर्जयेत् । कर्ता स्वमातरि जीवन्त्यां पित्रादित्रयाणां मातामहादित्रयाणां वृद्धिश्राद्धं कुर्यात् । जीवेत्तु यदि वर्गाद्यस्तं वर्गं तु परित्यजेदिति वचनात् । पितरि जीवति मात्रादित्रयाणां मातामहादित्रयाणां कुर्यात् । उभयोर्जीवत्त्वे मातामहवर्गस्यैव । जीवत्पिता सुतसंस्कारे मातृमातामहयोः कुर्यात्तस्यां जीवन्त्यां मातामहस्यैवेति बह्वृचपरिशिष्टात् । मातामहे जीवति मातृपितृवर्गयोः कुर्यात्त्रिष्वपि जीवत्सु पितुर्मात्रादीनामेव । पितामहे जीवति पितृप्रपितामहवृद्धप्रपितामहानां कुर्यात् । एवं पितामह्यां जीवन्त्यां मातुः पितामहे जीवति च ज्ञेयम् । केचित्पितरि जीवति पितुर्मात्रादिवर्गत्रयस्य कुर्यादित्याहुः । कर्तृनिर्णयादिविशेषस्तु ग्रन्थान्तरतोऽवगन्तव्यः । विस्तरभयान्नेहोच्यते । इति नान्दीश्राद्धविधिः ।

अथाष्टब्राह्मणपक्षमाश्रित्य पिण्डदानसहितस्तन्त्रेण नान्दीश्राद्धप्रयोगः । तत्राऽऽदौ कर्ता सपत्नीकः कृतमाङ्गलिकस्नानो धौतवासाः सालंकृतः करिष्यमाणकर्माङ्गत्वेन गणपतिपूजनपूर्वकं पुण्याहवाचनं कृत्वा नान्दीश्राद्धाङ्गत्वेन मातृकापूजनं कुर्यात् । तच्चेत्थम्—गोमयोपलिप्ते रङ्गवल्ल्यादिभिरलंकृते श्राद्धस्थले प्रतिमास्वक्षतपुञ्जेषु वा । ॐ गौर्यै नमः । गौरीमावाहयामि ॥ १ ॥ एवं सर्वत्र । ॐ पद्मायै नमः । २ ॐ शच्यै० ३ ॐ मेधायै० ४ ॐ सावित्र्यै० ५ ॐ विजयायै० ६ ॐ जयायै० ७ ॐ देवसेनायै० ८ ॐ स्वधायै० ९ ॐ स्वाहायै०

१० ॐ मातृभ्यो० ११ ॐ लोकमातृभ्यो० १२ ॐ धृत्यै० १३ ॐ पुष्ट्यै० १४ ॐ तुष्ट्यै० १५ ॐ कुलदेवतायै० १६ ॐ ब्राह्म्यै० १७ ॐ माहेश्वर्यै० १८ ॐ कौमार्यै० १९ ॐ वैष्णव्यै० २० ॐ वाराह्यै० २१ ॐ इन्द्राण्यै० २२ ॐ चामुण्डायै० २३ ॐ दुर्गायै० २४ ॐ क्षेत्रपालाय० २५ ॐ गणपतये नमः । २६ इति षड्विंशतिदेवता आवाह्य षोडशोपचारैः पूजयेत् । ततो मातृकाप्रीतये युग्मान्ब्राह्मणान्भोजयेदामान्नानि वा दद्यात् । इति मातृकापूजनम् ।

अथ नान्दीश्राद्धम् । कर्ता यज्ञोपवीती प्राङ्मुख आचम्य पवित्रपाणिः प्राणानायम्य देशकालौ संकीर्त्य दक्षिणं जान्वाच्य मातृपितामहीप्रपितामह्यः, नान्दीमुखाः पितृपितामहप्रपितामहा नान्दीमुखाः, मातामहमातुःपितामहमातुःप्रपितामहाः सपत्नीका नान्दीमुखाः, एतानुद्दिश्य करिष्यमाणामुककर्माङ्गत्वेन विहितं सदैवं सपिण्डमन्नेन हविषा नान्दीश्राद्धमद्य करिष्य इति संकल्प्य ब्राह्मणान्निमन्त्रयेत् । स्वयमुदङ्मुखः प्राङ्मुखोपविष्टस्य विप्रस्य दक्षिणं जानुं स्पृष्ट्वा, अस्मिन्नान्दीश्राद्धे सत्यवसुसंज्ञकानां विश्वेषां देवानां नान्दीमुखानां स्थाने त्वया क्षणः करणीयः । ॐ तथेति विप्रः । एवं द्वितीयस्य । इति वैश्वदेवार्थे द्वौ निमन्त्रयेत् । सर्वत्रेष्टिश्राद्धे कर्माङ्गश्राद्धे च क्रतुदक्षसंज्ञकानां विश्वेषां देवानां नान्दीमुखानामुल्लेखः । अस्मिन्नान्दीश्राद्धे नान्दीमुखानां मातृपितामहीप्रपितामहीनां स्थाने त्वया क्षणः करणीयः । ॐ तथेति । मातृवर्गे द्वौ निमन्त्रयेत् । अस्मिन्नान्दीश्राद्धे नान्दीमुखानां पितृपितामहप्रपितामहानां स्थाने त्वया क्षणः करणीयः । इति पितृवर्गे द्वौ । अस्मिन्नान्दीश्राद्धे नान्दीमुखानां मातामहमातुःपितामहमातुःप्रपितामहानां सपत्नीकानां स्थाने त्वया क्ष० । इति मातामहवर्गे द्वौ निमन्त्रयेत् । एवमष्टौ ब्राह्मणान्निमन्त्रयेत् । ततः काले निमन्त्रितान्विप्रान्समाहूय तेषां मङ्गलस्नानादि कारयित्वा स्वयमाचम्य प्राणानायम्य देशकालौ संकीर्त्य मातृपितामहीप्रपितामह्यः, नान्दीमुखा इत्यादि प्रथमया विभक्त्या पूर्ववदुच्चार्य, एतानुद्दिश्योपक्रान्तं नान्दीश्राद्धं करिष्य इति संकल्प्य यवोदकं कृत्वा पवित्रमन्त्रान्पठित्वा शुची वो हव्या इत्यादिभिर्यवोदकमभिमन्त्र्योपकल्पितान्पदार्थान्यवोदकेन प्रोक्ष्य विप्राणामग्रे ब्रह्मदण्डार्थं हिरण्यं निधाय सम-

१ क. ख. गणाधिपाय न° । २ ग. °र्थि द्वौ । ३ ग. °ति द्वौ पितृवर्गे । अ° ।

स्तसंपदित्यादि तान्प्रदक्षिणीकृत्य नान्दीश्राद्धं कर्तुं ममाधिकारसंपदस्त्विति भवन्तो ब्रुवन्तु । अस्तु नान्दीश्राद्धाधिकारसंपत् । ततः प्रत्येकं भवतः स्वागतम् । इति प्रब्रूयात् । सुस्वागतमिति प्रतिवचनम् । ततः पूर्ववत्पुनर्विप्रान्निमन्त्रयेत् । तत्रायं विशेषः—अस्मिन्नान्दीश्राद्धे सत्यवसुसंज्ञकानां० नान्दीमुखानां स्थाने युवाभ्यां क्ष० यः । इति द्वौ युगपदुक्ते प्राप्नुतां भवन्ताविति वदेत् । प्राप्नवावेति विप्रौ । एवं मात्रादीनां स्थाने द्वौ युगपन्निमन्त्रयेत् । ततः पाद्यार्थं चतुरस्रं मण्डलद्वयं निर्माय तयोः प्रागग्रान्दूर्वाङ्कुरान्दर्भान्वाऽऽस्तीर्य गन्धपुष्पयवैरभ्यर्च्य प्राङ्मुखोपविष्टयोर्दैविकविप्रयोः पादान्मण्डले निधाय सत्यवसुसंज्ञका विश्वे देवा नान्दीमुखा इदं वः पाद्यं स्वाहा नम इति घृताक्तपादेषु युगपद्विर्यवोदकं दत्त्वा शं नो देवीरिति क्रमेण पादान्प्रक्षाल्याभिवन्देत । एवमेव द्वितीयमण्डले द्वयोर्द्वयोर्युगपत् । मातृपितामहीप्रपितामह्यः, नान्दीमुखा इदं वः पाद्यं स्वाहा नमः । पितृपितामहप्रपितामहा नान्दीमुखा इदं वः पाद्यं स्वाहा नमः । मातामहमा० प्रपितामहाः सपत्नीका नान्दीमुखा इदं वः पाद्यं स्वाहा नमः । ततो मण्डलादुत्तरतो ब्राह्मणान्द्विराचमय्य (चाम्य) स्वयं पादौ प्रक्षाल्याऽऽचम्य पवित्रे धृत्वा ब्राह्मणैः सह श्राद्धभूमिमागत्याऽऽसनान्युपकल्प्य भूर्भुवः स्वः समाध्वमिति प्रत्येकं वदन्सर्वान्प्राङ्मुखानुपवेशयेत् । ततः प्रतिपात्रं घृतदीपं स्थापयित्वा वामकटिप्रदेशे सयवकुशसहितनीवीं बद्ध्वाऽऽचम्य देशकालौ स्मृत्वा पूर्ववन्मात्रादीन्प्रथमयोल्लिख्यतानुद्दिश्य प्रक्रान्तं नान्दीश्राद्धं करिष्ये, अपहता असुरा र० मनः । इति प्रदक्षिणं यवानवकीर्य यवा रक्षन्त्वसुरान्दर्भा० रक्षकः । इति द्वारदेशे कुशयवान्प्रक्षिप्य तद्विष्णोः परमं० ततम् । इति मन्त्रेण गायत्र्या चान्नानि संप्रोक्ष्य पाकादीनां पवित्रताऽस्तु इत्युक्त्वा तथाऽस्त्विति प्रत्युक्ते देवार्चनं कुर्यात् । देवविप्रहस्तयोरपो दत्त्वा सत्यवसुसंज्ञकानां विश्वेषां देवानां नान्दीमुखानामिदमासनमित्युक्त्वा प्रत्येकमासनं दत्त्वाऽपो दद्यात् । ततः प्रत्येकमासनं संस्पृश्यात्राऽऽस्यतामिति वदेत् । धर्मोऽसीति प्रत्युक्ते विप्रयोर्निरङ्गुष्ठौ दक्षिणहस्तौ धृत्वा नान्दीमुखदैवे क्षणः(णो?) क्रियेतामिति सकृदुक्त्वा ॐ तथेति विप्राभ्यां युगपदुक्ते प्राप्नुतां भवन्ताविति तृतीयनिमन्त्रणं कुर्यात् । प्राप्नवावेति विप्रौ युगपद्वदे-

१ ग. प्रतिद्वं ।

ताम् । ततः प्रागग्रेषु दूर्वाङ्कुरेषु दर्भेषु वाऽर्घ्यपात्रद्वयमासाद्य प्रोक्ष्योत्तानं कृत्वा पवित्रे निधायाप आसिच्य शं नो देवीरिति सकृदनुमन्त्र्य यवोऽसीति मन्त्रावृत्त्या यवानोप्य गन्धपुष्पादि क्षिप्त्वा देवपात्रे संपन्ने इत्यभिमृश्य सुसंपन्ने इति प्रत्युक्तो यवानादाय नान्दीमुखान्विश्वान्देवानावाहयिष्यामि। विश्वे देवास० दत्त। इति विप्रयोः क्रमेण दक्षिणपादादियुग्मक्रमेण पादजान्वंसशिरःसु यवानवकीर्य विश्वे देवाः शृणुते० मादयध्वम् । आगच्छन्तु महाभागा० तु ते । इति सकृदुपस्थाय स्वाहाऽर्घ्या इति मन्त्रावृत्त्या निवेद्य हस्तयोरपो दत्त्वा प्रथमविप्रहस्ते पवित्रं निधाय प्रथममर्घ्यपात्रादर्घ्यमादाय सत्यवसु० विश्वे देवा नान्दीमुखा इदं वोऽर्घ्यमिति दत्त्वा या दिव्या आप इति स्रवन्तीरनुमन्त्र्यापो दद्यात्। एवमेव द्वितीयमर्घ्यपात्राद्द्वितीयविप्रहस्ते दद्यात् । ततः सत्यवसु० देवा नान्दीमुखा अमी वो गन्धाः स्वाहा नमो न मम । गन्धद्वारां० आयने ते०० धूरसि०उद्दीप्यस्व०युवं वस्त्राणि०इति मन्त्रैर्गन्धपुष्पधूपदीपाच्छादनानि द्विर्द्विर्दत्त्वा पुष्पमालाभिर्भूषयित्वा युवा सुवासा इत्युक्त्वाऽर्चनविधेः संपूर्णतां वाचयित्वा ताभ्यामनुज्ञातः पित्रर्चनं कुर्यात् । अपो दत्त्वा नान्दीमुखानां मातृपितामहीप्रपितामहीनामिदमासनम्। इति सकृदुक्त्वा मन्त्रावृत्त्या वोभयोः क्रमेण दक्षिणभागे सयवान्युग्मान्प्रागग्रानृजून्दूर्वाङ्कुरान्दर्भान्वा दत्त्वाऽपो दद्यात्। एवमुत्तरत्र नान्दीमुखानां पितृपितामहप्रपितामहानामिदमासनम् । नान्दीमुखानां मातामहमातुःपितामहमातुः प्रपितामहानां सपत्नीकानामिदमासनमित्यूहः। ततोऽत्राऽऽस्येतामित्यादि तृतीयनिमन्त्रणान्तं द्वयोर्द्वयोर्वैश्वदेववत्। नान्दीमुखपित्र्ये क्षणः (णौ?) क्रियेतामिति विशेषः । ततोऽभ्युक्षितायां भुवि प्रागग्रेषु दर्भेषु प्रतिवर्गं त्रीणि त्रीणि पात्राणि प्राक्संस्थान्यासाद्य प्रोक्ष्योत्तानीकृत्य दर्भद्वयात्मकानि प्रागग्राणि पवित्राणि निधायाप आसिच्य शं नो देवीरिति सकृदनुमन्त्र्य

यवोऽसि सोमदेवत्यो गोसवे देवनिर्मितः ।

प्रत्नवद्भिः प्रत्तः पुष्ट्या नान्दीमुखान्पितॄनिमाँल्लोकान्प्रीणयाहि नः स्वाहा। इति मन्त्रावृत्त्या यवानोप्य गन्धपुष्पादि क्षिप्त्वाऽर्घ्यपात्राणि संपन्नानीत्युक्त्वा यवानादाय नान्दीमुखान्पितॄनावाहयिष्यामीत्युक्त्वाऽऽवाहयेति प्रत्युक्तो मातृपितामहीप्रपितामहीर्नान्दीमुखा आवाहयामीति दक्षिणाङ्गादिक्रमेण पादजान्वंसशिरःसु यवानवकिरेत् । इति द्वयोर्द्व-

गपदावृत्त्याऽऽवाहनम् । एवमुत्तरत्र । पितृपितामहप्रपितामहान्नान्दीमुखानावाहयामि । मातामहमातुःपितामहमातुःप्रपितामहान्सपत्नीकान्नान्दीमुखानावाहयामि, इत्यावाह्य त्रीणि त्रीण्यर्घ्यपात्राणि तत्तद्ब्राह्मणयोरग्रे निधाय क्रमेण द्वाभ्यां द्वाभ्यां विप्राभ्यां त्रीणि त्रीणि निवेदयेत्। तत्र मन्त्राः—नान्दीमुखा मातरः प्रीयन्ताम् । नान्दीमुखाः पितामह्यः प्रीयन्ताम् । नान्दीमुखाः प्रपितामह्यः प्रीयन्ताम् । नान्दीमुखाः पितरः प्रीयन्ताम् । नान्दीमुखाः पितामहाः प्रीयन्ताम् । नान्दीमुखाः प्रपितामहाः प्रीयन्ताम् । नान्दीमुखाः सपत्नीका मातामहाः प्रीयन्ताम् । नान्दीमुखाः सपत्नीका मातुःपितामहाः प्रीयन्ताम् । नान्दीमुखाः सपत्नीका मातुःप्रपितामहाः प्रीयन्ताम् । ततो मातृवर्गविप्रहस्तयोरपो दत्त्वा प्रथमविप्रहस्ते प्रथमार्घ्यपात्रस्थं पवित्रं निधाय प्रथमपात्रादर्धमर्घ्यमादाय देवतीर्थेन नान्दीमुखा मातर इदं वोऽर्घ्यमिति दत्त्वा या दिव्या इत्यनुमन्त्र्य तत्पवित्रं द्वितीयब्राह्मणहस्ते निधायावशिष्टमर्घ्यं नान्दीमुखा मातर इदं वोऽर्घ्यमिति सशेषं दत्त्वा या दिव्या इत्यनुमन्त्र्योभयोरपो दद्यात् । एवमेव द्वितीयपात्रस्थमर्घ्यं नान्दीमुखाः पितामह्य इदं वोऽर्घ्यमिति मन्त्रावृत्त्या ताभ्यामेव विप्राभ्यां विगृह्य दद्यात् । तथैव तृतीयं नान्दीमुखाः प्रपितामह्य इदं वोऽर्घ्यमिति मन्त्रावृत्त्या ताभ्यामेव दद्यात् । ततः पितृवर्गार्थान्यर्घ्याणि तद्ब्राह्मणाभ्यां पूर्ववदेकैकं विगृह्य विगृह्य दद्यात् । तत्र मन्त्राः—नान्दीमुखाः पितर इदं वोऽर्घ्यम् । नान्दीमुखाः पितामहा इदं वोऽर्घ्यम् । नान्दीमुखाः प्रपितामहा इदं वोऽर्घ्यम् । तथैव मातामहवर्गार्थानि तद्ब्राह्मणाभ्यां दद्यात् । तत्र मन्त्राः—नान्दीमुखाः सपत्नीका मातामहा इदं वोऽर्घ्यम् । नान्दीमुखाः सपत्नीका मातुःपितामहा इदं वोऽर्घ्यम् । नान्दीमुखाः सपत्नीका मातुः प्रपितामहा इदं वोऽर्घ्यम् । ततः संस्रवान्समवनीय ताभिरद्भिः पुत्रकामो मुखमनक्ति । ततो नान्दीमुखेभ्यः पितृभ्यः स्थानमसीति प्रथमपात्रं निधाय तृतीयपात्रेणापिदध्यात् । ततो वैश्वदेववद्गन्धाद्युपचारान्पुष्पमालाश्च दत्त्वाऽर्चनविधेः संपूर्णतां वाचयित्वा भोजनपात्रस्थापनार्थं सर्वाणि चतुरस्राणि मण्डलानि कृत्वा सयवान्दर्भान्प्रास्य भोजनपात्राणि संस्थाप्य पङ्क्तौ देववद्भस्ममर्यादां कृत्वा करशुद्ध्यादि विधाय घृताक्तमन्नमादाय मातृवर्गप्रथमब्राह्मणहस्ते दर्भानन्तर्धायावदानधर्मेण पाणिनाऽवदाय, अग्नये कव्यवाहनाय स्वाहा । अग्नये कव्यवाहनायेदं० इति प्रथमाहुतिं हुत्वा पूर्ववदवदाय सोमाय पितृमते स्वाहा । सोमाय

पितृमत इदं० इति द्वितीयां जुहुयात् । एवमेव द्वितीयादि सर्वेषां पाणिषु जुहुयात् । ब्राह्मणाः स्वस्वपाणिस्थमन्नं स्वस्वपात्रे संस्थाप्य बहिर्गत्वाऽऽचम्य यथास्थानमुपविशेयुः । कर्ता मूर्धानं दिवो० देवाः। आमासु० त् । इति भोजनपात्राण्याज्येनोपस्तीर्यान्नानि परिवेष्य पित्र्ये हुतशेषं च दत्त्वाऽन्ननिवेदनं कुर्यात् । देवपात्रस्थमन्नं सावित्र्याऽभ्युक्ष्य तूष्णीं परिषिच्येत्यादिपात्रालम्भनान्तं कृत्वा पृथिवी ते पात्रं० अत्रामुष्मिँल्लोक इत्यभिमन्त्र्य, अतो देवा अवन्तु नो० धामभिः । विष्णो हव्यं रक्षस्वेति विप्राङ्गुष्ठमन्ने निवेश्य सव्यपाणिना पात्रमालभ्य दक्षिणेन यवोदकमादाय सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्य इदमन्नममृतरूपं परिविष्टं परिवेक्ष्यमाणं चाऽऽतृप्तेः स्वाहा हव्यं नमो न ममेति जलं क्षिपेत् । एवं द्वितीयस्यान्नं निवेदयेत् । अथवोभयोस्तन्त्रेण ये देवासो० जुषध्वम् । इत्युपतिष्ठेत । एवं पित्र्येऽपि देववत् । तत्र विशेषः—मातृपितामहीप्रपितामहीभ्यो नान्दीमुखाभ्य इदमन्नममृतरूपं० पितृपितामहप्रपितामहेभ्यो नान्दीमुखेभ्य इदमन्नं० मातामहमातुःपितामहमातुःप्रपितामहेभ्यः सपत्नीकेभ्यो नान्दीमुखेभ्य इदमन्नं० इत्यन्नं निवेद्य नान्दीमुखाः पितरः प्रीयन्तामित्युपतिष्ठेत । ततः सप्रणवव्याहृतिकां सावित्रीं जपित्वा ब्रह्मार्पणं० समाधिना । हरिर्दाता० हरिः । चतुर्भिश्च० दतु । एको विष्णु० व्ययः । अनेन नान्दीश्राद्धे ब्राह्मणभोजनेन भगवान्नान्दीमुखपितृस्वरूपी श्रीपरमेश्वरः प्रीयताम् । वृद्धिरस्तु । आपोशनार्थमुदकं दत्त्वा प्राणाहुतिमन्त्रान्पठेत् । विप्राश्च बलिदानवर्जमुक्तभोजननियमयुक्ता भुञ्जीयुः । कर्ता, अपेक्षितं० मानसैः । यथासुखं जुषध्वम् । इत्युक्त्वा सव्याहृतिकां गायत्रीं जप्त्वा (पित्वा) भुञ्जानाञ्शकुनिसूक्तं स्वस्तिसूक्तं पावमानीः शंवतीरैन्द्रीरप्रतिरथं च श्रावयेत् । न पितृसूक्तम् । शकुनिसूक्तं कनिक्रददित्यादि । स्वस्तिसूक्तं स्वस्ति नो मिमीतामित्यादि । पावमान्यः स्वादिष्ठयेत्याद्याः । शंवत्यः शं न इन्द्राग्नी इत्याद्याः । ऐन्द्यः सुरूपकृत्नुमूतय इत्याद्याः । अप्रतिरथमाशुः शिशान इति सूक्तम् । तृप्तेषु सिद्धस्य हविषो मध्ये यन्नोचते तद्याचध्वम् । इत्युक्त्वाऽलमिति विप्रैरुक्ते उपास्मै गायता नरः० वता मधु । ऋक् ५ अक्षन्नमीमदन्त० हरी । इति पड्ऋचः श्रावयित्वा सत्यवसुसंज्ञका विश्वे देवा नान्दीमुखा रुचितमिति पृष्ट्वा सुरुचितमिति प्रत्युक्ते नान्दीमुखाः पितरः संपन्नम् । सुसंपन्नमिति प्रत्युक्ते शेषमन्नं किं क्रियतामिति वदेत् । विप्रा इष्टैः सह भुज्यतामिति वदेयुः । स्वीकारपक्षे स्वी कुर्युः ।

तत एतास्मिन्नेव काले पूर्वोद्धृतं सार्ववर्णिकमन्नं द्विजोच्छिष्टसमीपे प्रकिरेत् । असोमपाश्च०देविकम् । इति दैवे ।

ये कुमारा याः कुमार्यो ये च गर्भाद्विनिःसृताः ।
तेषामन्नमिदं प्रत्तं[1] तृप्यन्तु च मुदन्तु च ॥

इति पित्र्ये । तत उच्छिष्टभोग्भ्योऽन्नं[2] दीयतामित्यादि विप्रै[3]रुत्तरापोशनगण्डूषकरणहस्तप्रक्षालनादिशुद्ध्याचमनान्तं कारयित्वा द्विजोच्छिष्टपात्राणि निष्काश्य शुद्धभूमौ निखाय भुक्ताशयान्सम्यग्गोमयेनोपलिप्य तत्र पिण्डदानं कुर्यात् । तद्यथा—अपहता०दिषदः । इति मन्त्रावृत्त्या प्रागग्रा उदक्संस्थास्तिस्रो लेखा उल्लिख्याभ्युक्ष्य तासु क्रमेण प्रागग्रं बर्हित्रयमासाद्य प्रथमलेखां त्रिरुदकेनोपनयेत् । शुन्धन्तां नान्दीमुखा मातरः । शुन्धन्तां नान्दीमुखाः पितामह्यः । शुन्धन्तां नान्दीमुखाः प्रपितामह्यः । ततो द्वितीयलेखायाम्—शुन्धन्तां नान्दीमुखाः पितरः । शुन्धन्तां नान्दीमुखाः पितामहाः । शुन्धन्तां नान्दीमुखाः प्रपितामहाः । ततस्तृतीयलेखायाम्—शुन्धन्तां नान्दीमुखाः सपत्नीका मातामहाः । शुन्धन्तां नान्दीमुखाः सपत्नीका मातुःपितामहाः । शुन्धन्तां नान्दीमुखाः सपत्नीका मातुःप्रपितामहाः । ततः पृषदाज्यदधिमधुबदरयवमिश्रितशाल्यन्नेन श्रीफलसंनिभानष्टादश पिण्डान्कुर्यात् । केवलपृषदाज्यमिश्रितान्नेन वा । सर्पिषि दध्यानयति तत्पृषदाज्यम् । एतत्ते नान्दीमुखे मातर्ये च त्वामत्रानु तेभ्यश्चेति मन्त्रेण देवतीर्थेन मात्रे पिण्डं दत्त्वा पुनर्मन्त्रावृत्त्या द्वितीयं दद्यात् । एवमग्रेऽपि । एतत्ते नान्दीमुखे पितामहि ये च त्वामत्रानु तेभ्यश्च । एतत्ते नान्दीमुखे प्रपितामहि ये च त्वामत्रानु तेभ्यश्च । एतत्ते नान्दीमुख पितर्ये च त्वा०भ्यश्च । एतत्ते नान्दीमुख पितामह ये च त्वाम०भ्यश्च । एतत्ते नान्दीमुख प्रपितामह ये च त्वा०भ्यश्च । एतत्ते नान्दीमुख सपत्नीक मातामह ये च०भ्यश्च । एतत्ते नान्दीमुख सपत्नीक मातुःपितामह ये च०भ्यश्च । एतत्ते नान्दीमुख सपत्नीक मातुःप्रपितामह ये च०भ्यश्च । एवं क्रमेण बर्हित्रय एकैकस्मिन्षट् षट् पिण्डान्दद्यात् । ततोऽत्र नान्दीमुखाः पितरो मादयध्वम् । यथाभागमावृषायध्वमित्यनुमन्त्र्य सव्यावृदुदङ्ङावृत्य यथाशक्त्यप्राणन्नासित्वा, अमीमदन्त० नान्दीमुखाः पितरो यथाभागमावृषायीषत । इति पुनरनुमन्त्र्य

---

१ ग. दत्तं । २ ग °भोगेभ्यो° । ३ क. ख विप्राणामुत्त° ।

शेषमन्नमवघ्रायाऽऽचम्य पूर्ववत्पिण्डेषु यवोदकं निनयेत्। शुन्धन्तां नान्दीमुखा मातर इत्यादि। ततो नीवीं विस्रस्याभ्यञ्जनार्थं पिण्डेषु घृतं दद्यात्। नान्दीमुखे मातरभ्यङ्क्ष्वेत्यादि। ततो नान्दीमुखे मातरङ्क्ष्वेत्याद्यञ्जनम्। एतद्वो नान्दीमुखाः पितरो वासो मानोतोऽन्यन्नान्दीमुखाः पितरो युङ्ध्वम्। इति यथावयः प्रतिवर्गं मन्त्रावृत्त्या दशा-मूर्णास्तुकां वा लोम वा दद्यात्। ततः पिण्डानभ्यर्च्योपतिष्ठेत। नमो वो नान्दीमुखाः पितर इषे नमो वो नान्दीमुखाः पितर ऊर्जे नमो वो नान्दीमुखाः पितरः शुष्माय नमो वो नान्दीमुखाः पितरो घोराय नमो वो नान्दीमुखाः पितरो जीवाय नमो वो नान्दीमुखाः पितरो रसाय। स्वाहा वो नान्दीमुखाः पितरो नमो वो नान्दीमुखाः पितरो नम एता युष्माकं नान्दीमुखाः पितर इमा अस्माकं जीवा वो जीवन्त इह सन्तः स्याम। मनो न्वाहुवामहे०सोमेन पितॄणां च०। आत एतु म०ज्यो०दृशे। पुनर्नः०जीवं व्रातं०महि। अथैनान्प्रवाहयेत्। परेतन पितरः सोम्यासो० नियच्छत। ततः पिण्डान्नमस्कृत्य वीरं मे दत्त नान्दीमुखाः पितर इति मध्यमान्पिण्डानादाय पत्न्यै प्रयच्छेत्। सा च, आधत्त पितरो गर्भं०असत्। इति प्राश्नीयात्। ततः पिण्डानुद्वासयिष्य इत्युक्त्वोद्वास-येति प्रत्युक्तोऽवशिष्टाञ्जलादौ प्रक्षिपेत्। ततः शिवा आपः सन्तु। सौमनस्यमस्तु। यवाः पान्तु। दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिश्चास्तु। इत्युभयत्र कृत्वा ब्राह्मणानभिवाद्यास्मद्गोत्रं वर्धताम्। स्वस्तीति ब्रूते-त्युक्त्वा ब्राह्मणहस्तेषु क्षीरं यवोदकं च दत्त्वा नान्दीमुखा विश्वे देवाः प्रीयन्ताम्। नान्दीमुखाः पितरः प्रीयन्ताम्। इति वदेत्। तत आसादि-तमर्घ्यपात्रं चालयेत्। ब्राह्मणेभ्यस्ताम्बूलादि दत्त्वा द्राक्षामलकमूलय-वान्तं निष्क्रयं वा दक्षिणात्वेन दद्यात्। द्राक्षामलकानि तन्निष्क्रयमेव वा। दक्षिणाः पान्त्विति भवन्तो ब्रुवन्तु। नान्दीमुखान्पितॄन्वाचयिष्य इत्युक्त्वा वाच्यतामिति विप्रैरुक्ते नान्दीमुखा विश्वे देवाः प्रीयन्तामिति भवन्तो ब्रुवन्तु। नान्दीमुखाः पितरः प्रीयन्तामिति भवन्तो ब्रुवन्तु। सर्वत्र प्रीयन्तामिति विप्राः। कर्ता मद्गृहे सततं शोभनवृद्धिरस्त्विति भवन्तो ब्रुवन्तु इति वदेत्। त्वद्गृहे सतत शोभनवृद्धिरस्तु। शोभनं हविः, इति च विप्रा वदेयुः। कर्ता त्यमूषु वाजिनं देवजूतं सहा०हुवेम। उत्तिष्ठत नान्दीमुखाः पितरो नान्दीमुखैर्विश्वैर्देवैः सहेति विप्रान्दर्भैः संस्पृशन्, ॐ संपन्नमिति विसृजेत्। ते च ॐ संपन्नमिति ब्रुवन्त उत्तिष्ठेयुः। कर्ता शान्तिः पुष्टिस्तुष्टिश्चास्त्विति भवन्तो ब्रुवन्तु। तथाऽ-

स्त्विति विप्रैरुक्ते प्राङ्गणे विप्रानुपवेश्य प्रदक्षिणीकृत्य तेषां हस्तेष्वक्षतपुष्पादि दत्त्वा प्राञ्जलिः प्राङ्मुखस्तिष्ठन्वरान्याचेत । दातारो नोऽभि० च नोऽस्तु अन्नं च नो० कंचन । विप्राः, दातारो वोऽभिवर्धन्तां वे० चिद्दुं कंचन । इहैवस्तं मा० गृहे । आयुः प्रजां धनं० महाः । एताः सत्या आशिषः सन्तु इत्याशिषो दद्युः । कर्ता

माता पितामही चैव तथैव प्रपितामही ।
पिता पितामहश्चैव तथैव प्रपितामहः ॥
मातामहस्तत्पिता च प्रमातामहकादयः ।
एते भवन्तु सुप्रीताः प्रयच्छन्तु च मङ्गलम् ॥

इति श्लोकद्वयं पठेत् । मात्रादयः सुप्रीता मङ्गलं प्रयच्छन्तु इति विप्राः । ततः कर्ता—आधारात्किंचिद्द्रव्यं गृहीत्वा तेन संकल्पपात्रसंघट्टनेन शब्दं कुर्यात् । इलामग्रे० स्वस्मै । शिवं शिवं शिवम् । ततो विप्रान्पादाभ्यङ्गादिभिः परितोष्य प्रणिपत्य प्रार्थयेत् । अद्य मे सफलं० पत्रशाकादिदा० यस्य स्मृत्या० मन्त्रहीनं० नान्दीश्राद्धमच्छिद्रमस्त्विति भवन्तो ब्रुवन्तु । नान्दीश्राद्धमच्छिद्रमस्त्विति प्रतिवचनम् । नान्दीश्राद्धफलसमृद्धिरस्त्विति भव० तु । नान्दीश्राद्धफलसमृद्धिरस्त्विति विप्राः । कर्ता प्रजापते न त्व० रयीणाम् । अनेन नान्दीश्राद्धेन नान्दीमुखपितृस्वरूपी भगवाञ्श्रीपरमेश्वरः प्रीयताम् । वृद्धिरस्तु ततो मातृका विसर्जयेत् ।

इति श्रीमच्चित्तपावनके० श्राद्धमञ्जर्यां नान्दीश्राद्धप्रयोगः ।

---

अथ वृत्त्यनुसारेण संक्षिप्तः सूत्रोक्तो नान्दीश्राद्धप्रयोगः । कर्ता मङ्गलस्नात आचम्य प्राणानायम्य देशकालौ संकीर्त्य करिष्यमाणनान्दीश्राद्धाङ्गत्वेन मातृकापूजनं करिष्य इति संकल्प्य पूर्वोक्तप्रकारेण मातृकापूजनं कृत्वाऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य मातृपितामहीप्रपितामह्यो नान्दीमुखाः । पितृपितामहप्रपितामहा नान्दीमुखाः । मातामहमातुःपितामहमातुःप्रपितामहाः सपत्नीका नान्दीमुखाः । एतानुद्दिश्य करिष्यमाणामुककर्माङ्गत्वेन विहितं सदैवं सपिण्डमन्नेन हविषा नान्दीश्राद्धमद्य करिष्य इति संकल्प्य ब्राह्मणान्निमन्त्रयेत् । अस्मिन्ना-

१ ग. स्मृत्वा ।

न्दीश्राद्धे सत्यवसुसंज्ञकानां क्रतुदक्षसंज्ञकानां वा विश्वेषां देवानां नान्दीमुखानां स्थाने त्वया क्षणः करणीयः। ॐ तथेति प्रतिवचनम्। इति वैश्वदेवार्थं द्वौ निमन्त्रयेत्। अस्मिन्नान्दीश्राद्धे नान्दीमुखानां मातृपितामहीप्रपितामहीनां स्थाने त्वया क्षणः करणीय इति द्वौ मातृवर्गे। एवं पितृवर्गे मातामहवर्गे च द्वौ द्वौ निमन्त्रयेत्। ततः काले निमन्त्रितान्समाहूय तेषां मङ्गलस्नानपाद्याचमनानि विधाय नान्दीमुखसत्यवसुसंज्ञकवैश्वदेवस्वरूपाविति ध्यायन्द्वौ प्राङ्मुखावुपवेश्य ममैते नान्दीमुखा मात्राद्याः पितर इति ध्यायन्षट् प्राङ्मुखानुपवेशयेत्। तत आचम्य प्राणानायम्य देशकालौ संकीर्त्य मातृपितामहीप्रपितामह्यो नान्दीमुखा इत्यादि प्रथमया विभक्त्या पूर्ववदुच्चार्यैतानुद्दिश्योपक्रान्तं नान्दीश्राद्धं करिष्य इति संकल्प्य कुरुष्वेति प्रत्युक्तः, तद्विष्णोः परमं०राततम्। इति मन्त्रेण गायत्र्या च पाकप्रोक्षणं विधाय देवार्चनं कुर्यात्। सर्वत्राऽऽसनाद्याच्छादनान्तेषूपचारेष्वाद्यन्तयोरपो दद्यात्। सत्यवसुसंज्ञकानां विश्वेषां देवानां नान्दीमुखानामिदमासनमिति दक्षिणभाग ऋजून्दर्भानुभयोर्दत्त्वा प्रागग्रेषु दर्भेषु पात्रद्वयमासाद्य प्रागग्राणि दर्भद्वयात्मकानि पवित्राणि निधायाप आसिच्य शं नो देवीरिति सकृदुभयत्र यवोऽसि धान्यराजो वेति मन्त्रावृत्त्या यवानोप्य गन्धादि क्षिप्त्वा देवपात्रे संपन्ने इत्यभिमृश्य विश्वान्देवान्नान्दीमुखानावाहयिष्यामीत्युक्त्वा विश्वे देवास०दत। सत्यवसुसंज्ञकान्विश्वान्देवान्नान्दीमुखानावाहयामीति सकृदुक्त्वोभयोः क्रमेण दक्षिणपादादियुग्मक्रमेण पादजान्वंसशिरःसु यवानवकीर्य विश्वे देवाः शृणु०यध्वम्। आगच्छन्तु महा० तु न इति सकृदुपस्थाय स्वाहाऽर्घ्या इति मन्त्रावृत्त्या निवेद्य सत्यवसुसं० नान्दीमुखा इदं वोऽर्घ्यमित्यर्घ्यं दत्त्वा या दिव्या इत्यनुमन्त्रयेत्। एवं द्वितीये। ततः सत्यवसु०देवा नान्दीमुखा अमी वो गन्धाः स्वाहा नमो न मम। एवं पुष्पधूपदीपाच्छादनानि दत्त्वाऽर्चनविधेः संपूर्णतां वाचयित्वा ताभ्यामनुज्ञातः पित्रर्चनं कुर्यात्। तत्र सर्वत्र यज्ञोपवीत्येव वैश्वदेवार्चनधर्मेण। विशेषस्तूच्यते। नान्दीमुखानां मातृपितामहीप्रपितामहीनामिदमासनमिति सकृदुक्त्वोभयोः क्रमेणाऽऽसनं दद्यात्। एवमुत्तरत्र। नान्दीमुखानां पितृपितामहप्रपितामहानामिदमासनम्। नान्दीमुखानां मातामह०प्रपितामहानां सपत्नीकानामिदमासनमित्यूहः। ततो

१ ग. वार्ये द्वौ। २ ग. 'इतिष्यामी'।

नवार्घ्यपात्राण्यासाद्य पवित्राणि निधायाप आसिच्य शं नो देवीरिति सकृदनुमन्त्र्य यवोऽसि सोमदेवत्यो गोसवे देवनिर्मितः । प्रत्नवद्भिः प्रत्तः पुष्ट्या नान्दीमुखान्पितॄनिमाँल्लोकान्प्रीणयाहि नः स्वाहेति प्रतिपात्रं मन्त्रावृत्त्या यवानोप्य गन्धादि क्षिप्त्वा पात्राणि तत्तद्विप्राग्रे निधाय द्वाभ्यां द्वाभ्यां त्रीणि निवेदयेत् । तत्र मन्त्राः—नान्दीमुखा मातरः प्रीयन्ताम् । नान्दीमुखाः पितामह्यः प्री० । ना०प्रपितामह्यः प्री० । ना०पितरः प्री० । नान्दीमुखाः पितामहाः प्री० । ना०प्रपितामहाः प्री० । ना०सपत्नीका मातामहाः प्री० । ना०सपत्नीका मातुःपितामहाः प्री० । ना० सपत्नीका मातुःप्रपितामहाः प्रीयन्ताम् । ततो मातृवर्गविप्रयोः प्रथमविप्रहस्ते प्रथमपात्रस्थमर्धमर्घ्यं नान्दीमुखा मातर इदं वोऽर्घ्यं दत्त्वा या दिव्या इत्यनुमन्त्र्यावशिष्टमर्घ्यं द्वितीयविप्रहस्ते नान्दीमुखा मातर इदं वोऽर्घ्यमिति दत्त्वा या दिव्या इत्यनुमन्त्रयेत् । एवमेव द्वितीयपात्रस्थमर्घ्यं तृतीयपात्रस्थं च ताभ्यामेव विप्राभ्यां दद्यात् । नान्दीमुखाः पितामह्य इदं वोऽर्घ्यम् । नान्दीमुखाः प्रपितामह्य इदं वोऽर्घ्यमिति द्विर्द्विर्मन्त्रौ । ततः पितृवर्गार्थान्यर्घ्याणि तद्ब्राह्मणाभ्यां पूर्ववद्दद्यात् । तत्र मन्त्राः— नान्दीमुखाः पितर इदं वोऽर्घ्यम् । नान्दीमुखाः पितामहा इदं वोऽर्घ्यम् । नान्दीमुखाः प्रपितामहा इदं वोऽर्घ्यम् । तथैव मातामहवर्गार्थानि तद्ब्राह्मणाभ्यां दद्यात् । तत्र मन्त्राः—नान्दीमुखाः सपत्नीका मातामहा इदं वोऽर्घ्यम् । नान्दीमुखाः सपत्नीका मातुःपितामहा इदं वोऽर्घ्यम् । नान्दीमुखाः सपत्नीका मातुः प्रपितामहा इदं वोऽर्घ्यम् । संस्रवान्समवनीय ताभिरद्भिः पुत्रकामो मुखमनक्ति । अपः स्पृष्ट्वा तत्पात्रं प्रपितामहपात्रेणापिधाय मातृपितामहीप्रपितामह्यो नान्दीमुखा इत्याद्युच्चार्य गन्धपुष्पधूपदीपाच्छादनानि प्रदायार्चनविधेः संपूर्णतां वाचयित्वा मण्डलेषु भोजनपात्राण्यासाद्य घृताक्तमन्नमादाय पित्र्यविप्रपाणिषु हस्तेनावदानधर्मेण, अग्नये कव्यवाहनाय स्वाहा । अग्नये कव्यवाहनायेदं० । सोमाय पितृमते स्वाहा । सोमाय पितृमत इदं० । इति प्रत्येकं द्वे द्वे आहुती जुहुयात् । अपि वैकैकामाहुतिं विगृह्य विगृह्य जुहुयात् । विप्राः स्वस्वपाणिस्थमन्नं स्वे स्वे पात्रे संस्थाप्य बहिर्गत्वाऽऽचम्य यथास्थानमुपविशेयुः । कर्ता देवपूर्वं भोजनपात्राण्युपस्तीर्यान्नं परिविष्य हुतशेषं पितृपात्रेषु दत्त्वा देवपात्रस्थमन्नं सावित्र्याऽभ्युक्ष्य सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नान्दीमुखेभ्य

१ ख ग 'य इ'।

इदमन्नममृतरूपं परिविष्टं परिवेक्ष्यमाणं चाऽऽ तृप्तेः स्वाहा हव्यं नमो न ममेत्युभयोर्युगपन्निवेद्य पितृपात्रस्थमन्नं सावित्र्याऽभ्युक्ष्य मातृपितामहीप्रपितामहीभ्यो नान्दीमुखीभ्य इदमन्नममृतरूपं परिविष्टं परिवेक्ष्यमाणं चाऽऽ तृप्तेः स्वाहा हव्यं न ममेति सकृदुक्त्वोभयोर्निवेदयेत्। एवमुत्तरत्र। पितृपितामहप्रपितामहेभ्यो नान्दीमुखेभ्य इदमन्नं० मातामहमातुःपितामहमातुःप्रपितामहेभ्यः सपत्नीकेभ्यो नान्दीमुखेभ्य इदमन्नं० इति निवेद्य ब्रह्मार्पणं कृत्वाऽऽपोशनार्थमुदकं दद्यात्। विप्रा बलिदानवर्जमापोशनं कृत्वा भुञ्जीरन्। कर्ता भुञ्जानाञ्छकुनिसूक्तं स्वस्तिसूक्तं पावमानीः शंवतीरैन्द्रीरप्रतिरथं च श्रावयेत्। तृप्तेषु, उपास्मै गा० मधु। अक्षन्नमी० हरी। इति पञ्चर्चः श्रावयेत्। ततो ब्राह्मणान्पृच्छति संपन्नमिति। ते च संपन्नमिति प्रत्यूचुः। कर्ता पिण्डार्थं प्रकिरणार्थं चान्नमुद्धृत्य शेषं निवेदयेत्। शेषमन्नं किं क्रियताम्। विप्रा इष्टैः सह भुज्यताम्। कर्ता प्रकिरणीयमन्नं सजलं विप्रोच्छिष्टसमीपे भुवि तूष्णीं प्रकीर्य विप्रेभ्य उत्तरापोशनं दत्त्वा तेषां गण्डूषकरणादिशुद्धा(द्ध्या)चमनान्तं कारयित्वोच्छिष्टपात्राणि निष्काश्य भुक्ताशयान्सम्यग्गोमयेनोपलेपयित्वा (प्य) तत्र, अपहता असु० पदः। इति मन्त्रावृत्त्या प्रागग्रास्तिस्रो लेखा उल्लिख्याभ्युक्ष्य बर्हिस्त्रयमासाद्य क्रमेणोदकं निनयेत्। शुन्धन्तां नान्दीमुखा मातर इत्यादि। ततः पृषदाज्यमिश्रितान्नेनाष्टादश पिण्डान्कृत्वा, एतत्ते नान्दीमुखे मातर्ये च त्वामत्रानु तेभ्यश्चेति मन्त्रावृत्त्या मात्रे द्वौ पिण्डौ दद्यात्। एवं पितामह्यादिभ्यस्तत्तन्नामोच्चारपूर्वकं द्वौ द्वौ दद्यात्। अनुमन्त्रणादिपिण्डप्रतिपत्त्यन्तं पूर्ववत्। अन्ये त्वनुमन्त्रणादि नेच्छन्ति। ततः पूर्वासादितमर्घ्यपात्रं चालयित्वा ब्राह्मणेभ्यस्ताम्बूलं दत्त्वा द्राक्षामलकादि तन्निष्क्रयं वा दक्षिणात्वेन दत्त्वाऽलंकारादि दत्त्वा ॐ संपन्नमित्युक्त्वा विसृजेत्। ते च ॐ संपन्नमिति ब्रुवन्त उत्तिष्ठेयुः। कर्ता प्राङ्मुखो बद्धाञ्जलिस्तिष्ठन्वरान्याचेत—दातारो नोऽभिवर्धन्ताम्० बहु देयं च नोऽस्त्विति। विप्रा दातारो वोऽभिवर्धन्तामित्याद्याशिषो वदेयुः। कर्ता माता पितामही०। पिता पितामहश्चैव०। मातामह०। एते भवन्तु सु०। कर्ता, इळामग्ने० स्वस्मै। शिवं शिवं शिवम्। इति त्रिर्हिरण्येन पात्रे शब्दं कुर्यात्। अद्य मे सफलं जन्मेत्यादि विप्रान्संप्रार्थ्य प्रजापते० रयीणाम्। अनेन नान्दीश्राद्धेन श्रीपरमेश्वरः प्रीयताम्।

१ क ख विप्राणामुत्त॰। २ ग °ति त्रिर°।

ततो मातृका विसर्जयेत् । सांकल्पिकनान्दीश्राद्धप्रयोगस्तु प्रयोगरत्नादाववगन्तव्यः ।

इति श्रीमच्चित्तपावनके॰ श्राद्धमञ्जर्यां सूत्रोक्तो
नान्दीश्राद्धप्रयोगः ।

---

अथ श्राद्धानुकल्पाः । तत्र यथोक्तसर्वविप्रालाभे त्वाह हेमाद्रौ व्यासः—

काणाः कुष्ठाश्च कुब्जाश्च दरिद्रा व्याधितास्तथा ।
सर्वे श्राद्धे नियोक्तव्या मिश्रिता वेदपारगैः ॥

तत्रैव वसिष्ठः—अपि चेन्मन्त्रविद्युक्तः शारीरैः पङ्क्तिदूषणैः ।
अदुष्यं तं यमः प्राह पङ्क्तिपावन एव सः ॥

पङ्क्तिदूषणकरैः कुष्ठादिशारीरदूषणैर्युक्तोऽपि वेदपारगश्चेच्छ्राद्धे भोजयेदित्यर्थः । मातृश्राद्धे तु विप्रालाभे सुवासिन्योऽपि भोजनीया इत्युक्तं निर्णयसिन्धौ । तत्रैवानेकविप्रालाभे त्वाह शङ्खः—

भोजयेदथवाऽप्येकं ब्राह्मणं पङ्क्तिपावनम् ।
दैवे कृत्वा तु नैवेद्यं पश्चात्तस्य तु निर्वपेत् ॥ इति ।

अशक्तावपि तथैवोक्तं ग्रन्थान्तरे—

अशक्तावेकविप्रं वा भोजयेत्पङ्क्तिपावनम् ।
तेन तत्फलमाप्नोति शक्तौ सत्यां न तत्फलम् ॥ इति ।

तद्विधिमाह वसिष्ठः—

यद्येकं भोजयेच्छ्राद्धे दैवं तत्र कथं भवेत् ।
अन्नं पात्रे समुद्धृत्य सर्वस्य प्राकृतस्य च ॥
देवतायतने कृत्वा ततः श्राद्धं समाचरेत् ।
प्रास्येदग्नौ तदन्नं तु दद्याद्वा ब्रह्मचारिणे ॥ इति ।

हेमाद्रौ देवलः—एकेनापि हि विप्रेण षट्पिण्डं श्राद्धमाचरेत् ।
षडर्घ्यान्दापयेत्तत्र षड्भ्यो दद्यात्तथा हविः ॥ इति ।

पाद्मे च—सकृदभ्यर्चितं लिङ्गं शालग्रामशिलां च यः ।
पीठे संस्थापयित्वा तु श्राद्धं च कुरुते नरः ।
पितरस्तस्य तिष्ठन्ति कल्पकोटिशतं दिवि ॥ इति ।

---

१ क तादवग॰ । २ क ख ॰दैव चार्चे॰ ।

अस्मिन्पक्षे पीठादौ शालग्रामशिलां शिवलिङ्गं वा तदुभयं वा प्राङ्मुखं संस्थाप्य तद्दक्षिणत उदङ्मुखं पित्र्यविप्रमुपवेश्य सर्वमविकृतं श्राद्धप्रयोगं कुर्यात् । वैश्वदेविकविप्रनिमन्त्रणादीनां लोपः । परिवेषणकाले सर्वस्मादन्नात्पुरुषाहारपरिमितं पात्रान्तरे कृत्वा देवसमीपे निधायान्ननिवेदनकाले तदन्नं सावित्र्याऽभ्युक्ष्य परिषिच्य पात्रमालभ्य विश्वेभ्यो देवेभ्य इदमन्नममृतरूपं परिविष्टं स्वाहा हव्यं नमो न ममेति विश्वदेवोद्देशेन देवाय निवेद्य पित्र्यपात्रस्थान्ननिवेदनादि कृत्वा देवनिवेदितमन्नं ब्रह्मचारिणे दद्यात् । तदलाभेऽग्नौ दहेदिति चन्द्रिकायामेव ।

अथ दर्भबटुश्राद्धविधिः । सर्वथा विप्रालाभे तत्प्रतिनिधित्वेनाऽऽसनेषु दर्भबटुं निधाय तानेव विप्रान्ध्यायन्सर्वमविकृतं श्राद्धप्रयोगं कुर्यात् । ब्राह्मणसंबन्धिमन्त्रप्रतिवचनानि स्वयमेव वदेत् । तदुक्तं चन्द्रिकायां देवलेन—

निधाय वा दर्भबटूनासनेषु समाहितः ।
प्रैषानुप्रैषसंयुक्तं विधानं प्रतिपादयेत् ॥ इति ।

दर्भबटुर्दर्भसमूहः । हेमाद्रौ सत्यव्रतः—

निधाय दर्भनिचयमासनेषु समाहितः ।
प्रैषानुप्रैषसंयुक्तं सर्वं श्राद्धं प्रकल्पयेत् ॥

नात्र दर्भसंख्यानियमः । तदाह कात्यायनः—

यज्ञवस्तुनि मुष्टौ च स्तम्बे दर्भबटौ तथा ।
दर्भसंख्या न विहिता विष्टरास्तरणेषु च ॥ इति ।

अत्राग्नौकरणं दर्शादौ गृह्याग्निमता गृह्याग्नौ कर्तव्यम् । तदभावे लौकिकाग्नावपि । श्राद्धे त्वौपासनाग्नौ तु निरग्निर्लौकिकेऽनल इति वचनात् ।

मण्डनोऽपि—नष्टाग्निर्दूरभार्यश्च पार्वणे समुपस्थिते ।
संधायाग्निं ततः कुर्याद्धोममग्निं समुत्सृजेत् ॥ इति ।

यद्यप्याश्वलायनानां सूत्रे पाणिस्मार्ताग्नी विना विधानान्तरं नोक्तं तथाऽप्येतादृशस्थले स्वाविरुद्धमन्यतो ग्राह्यमित्युक्तत्वाच्छास्त्रान्तरमपि स्वीकरणीयम् । अग्नौकरणप्रयोगस्तु पार्वणश्राद्धान्ते दर्शित एव । अन्ननिवेदनादौ यथाश्रुतं ब्राह्मणशब्दस्यैव निर्देश इदमन्नं हविरयं ब्राह्मण आहवनीयार्थे इत्यादि । सोमप्रतिनिधिपूतिकादिवत् । दक्षिणामन्यस्मै दद्यादिति कमलाकरः । संकलिपतान्नप्रतिपत्तिमाह देवलः—

१ क ख °ति । अत्र मूर चन्द्रिकाया द्रष्टव्यम् । म° ।

पात्राभावे क्षिपेदग्नौ गवे दद्यात्तथाऽप्सु वा ।
न तु प्राप्तस्य लोपोऽस्ति पैतृकस्य विशेषतः ॥ इति ।

आमहेमपक्षयोस्तु श्राद्धं निर्वर्त्य तद्द्रव्यं कालान्तरे ब्राह्मणाय ब्राह्मणेभ्यो वा दद्यादिति । इति दुर्भिक्षश्राद्धविधिः ।

अथ कश्चित्प्रतिनिधिनाऽपि श्राद्धं कारयेत् । तदुक्तं हेमाद्रौ वाराहे—

न शक्नोति स्वयं कर्तुं यदा ह्यनवकाशतः ।
श्राद्धं शिष्येण पुत्रेण तदन्येनापि कारयेत् ॥
नियमानाचरेत्सोऽपि नियतांश्च वसुंधरे ।
यजमानोऽपि तान्सर्वानाचरेत्सुसमाहितः ॥

स्कान्देऽपि—राजकार्ये नियुक्तस्य बन्धनिग्रहवर्तिनः ।
व्यसनेषु च सर्वेषु श्राद्धं विप्रेण कारयेत् ॥ इति ।

इति प्रतिनिधिश्राद्धम् ।

अथाऽऽमश्राद्धम् । तन्निमित्तान्याह चन्द्रिकायां कात्यायनः—

आपद्यनग्नौ तीर्थे च प्रवासे पुत्रजन्मनि ।
आमश्राद्धं प्रकुर्वीत भार्यारजसि संक्रमे ॥

तत्रैव मरीचिः—श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्तितम् ।
अमावास्यादिनियतं माससंवत्सराद्दृते ॥

मासो मासिकम् । संवत्सरः सांवत्सरिकम् । स्मृतिदर्पणे—

मृताहं च सपिण्डं च गयाश्राद्धं महालयम् ।
आपन्नोऽपि न कुर्वीत श्राद्धमामेन कर्हिचित् ॥

ग्रहणे तु प्रत्याब्दिकं भोक्तृसंभवे पक्वान्नेनैव कार्यम् । भोक्तुरसंभव आमेन हेम्ना वा कार्यमिति चन्द्रिकायाम् । तीर्थप्रवासादौ स्वामादिना श्राद्धं कार्यम् । पाकश्राद्धं तु न भवत्येवेति हेमाद्र्यादयः । सर्वत्र पाकाभाव आमादिना पाकसंभवे त्वन्नेनैवेति विज्ञानेश्वरादयः । आमं वितुषधान्यमिति चन्द्रिकायाम् । तत्राऽऽमं द्विजभोजनपर्याप्तादन्नाच्चतुर्गुणं द्विगुणं त्रिगुणं वा सोपस्करं दद्यात् । अत्यशक्तौ सममपीति स्मृत्यर्थसारे ।

व्यासः—सिद्धान्ने तु विधिर्यः स्यादामश्राद्धेऽप्यसौ विधिः ।
हस्तेऽग्नौकरणं कुर्याद्ब्राह्मणस्य विधानतः ॥

---

१ क ख वाऽपि श्रा॰ ।

चन्द्रिकायाम्–आमश्राद्धं यदा कुर्यात्पिण्डदानं कथं भवेत् ।
गृहपाकात्समुद्धृत्य सक्तुभिः पायसेन वा ॥
पिण्डान्दद्याद्यथालाभं तिलैः सह विमत्सरः ॥ इति ।

अग्नौकरणविकिरादौ त्वाममेवेति तत्रैव ।

सिन्धौ–तृप्तिप्रश्नोऽवगाहश्च जुपप्रश्नो यथासुखम् ।
आमश्राद्धे भवेन्नैतदापोशनं च पञ्चमम् ॥

अवगाहोऽङ्गुष्ठनिवेशनम् । आमश्राद्धमनङ्गुष्ठमग्नौकरणवर्जितम् ।
तृप्तिप्रश्नविहीनं तु कर्तव्यं मानवैर्ध्रुवम् ।
आवाहनं नैव भवेदर्घ्यदानं तथैव च ॥ इति ।

हेमाद्रौ भविष्ये–आवाहनं भवेत्कार्यमर्घ्यदानं तथैव चेति । विकिरं नैव कुर्यातेति धर्मप्रदीपे । तृप्तिप्रश्नादीनां न्यायतोऽर्थाभावाल्लोपसिद्धेरयमनुवादः । आवाहनार्घ्यदानाग्नौकरणविकिराणां पूर्वोक्तव्यासादिवचनविरोधाद्विकल्प इति प्रतिभाति । शाखान्तरविषयं वाऽस्त्विति कमलाकरः ।

मरीचिः–आवाहने स्वधाकारे मन्त्रा ऊह्या विसर्जने ।
अन्यकर्मण्यनूह्याः स्युरामश्राद्धविधिः स्मृतः ॥ इति ।

यद्यपि तस्माद्वचं नोहेदित्यृगूहो निषिद्धस्तथाऽपि वचनाद्भवतीति कमलाकरः । आवाहने पितॄन्हविषे अत्तव इत्यत्र स्वीकर्तव इत्यूहः । विसर्जनमन्त्रे तृप्ता यातेत्यत्र तर्प्स्यथ यातेत्यूहः । स्वधा पित्र्यहविर्दानं तत्करणं च स्वधाकारस्तदङ्गमन्त्र इदमन्नमित्यादिस्तत्रेदमाममित्यादिरूपेणोहः कार्य इति स्वधाकार इत्यस्यार्थ इति चन्द्रिकाकारः । स्वधाकारे नमो वः पितर इष इत्यत्र इष इतिपदस्थाने आमद्रव्यायेत्यूह इति कमलाकरः । अस्मिन्नामश्राद्धे ब्रह्मचर्यादिनियमा न सन्तीति पूर्वमेवोक्तम् । सिन्धौ हारीतः—

आमश्राद्धं तु पूर्वाह्णे एकोद्दिष्टं तु मध्यतः ।
पार्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकम् ॥ इति ।

अथाऽऽमश्राद्धप्रयोगः–पूर्वाह्ण एव देशकालौ संकीर्त्य प्राचीनावीती षष्ठ्यन्तान्पितॄनुच्चार्यैतेषां तृप्त्यर्थममुकश्राद्धं सदैवं सपिण्डं पार्वणेन विधिनाऽऽमान्नेन हविषा सद्यः करिष्य इति संकल्प्य पूर्ववद्वैश्वदेवार्थं पित्रर्थं च ब्राह्मणान्निमन्त्र्य, अस्मत्पित्रादीन्भवत्स्वावाहयिष्यामीत्यन्तमविकृतं सर्वं पार्वणवत्कृत्वाऽऽवाहनमन्त्र ऊहः कार्यः । यथोशन्तस्त्वा

निधीम०पितॄन्हविषे स्वीकर्तव इति विशेषः। पितॄणामाच्छादनप्रदाना-न्तमर्चनं विधायार्चनविधेः संपूर्णतां वाचयित्वाऽऽचम्य घृताक्तमामद्रव्य-मादाय तेन विप्रपाणिष्वग्नौकरणं विधाय देवपित्र्यविप्राणां पुरतः क्रमेण पात्रेष्वामानि निधाय दैविकं गायत्र्या प्रोक्ष्य तूर्ष्णीं परिषिच्येत्यादि-पात्रालम्भनान्तं कृत्वा पृथ्वी ते पात्रमित्यादि असुत्राशुष्मिँल्लोके, इदं विष्णुर्विच०सुरे। विष्णो हव्यं रक्षस्वेत्युक्त्वा पुरूरवार्द्रवसंज्ञका विश्वे देवा देवता, इदमामं हविरयं ब्राह्मण०गदाधर, इदमामं ब्रह्मणे दत्तं सुवर्ण-पात्रस्थमक्षय्यवटच्छायेयम्। पुरूरवार्द्रवसंज्ञकेभ्यो विश्वेभ्यो देवेभ्य इदमामं सोपस्करममृतरूपं स्वाहा न ममेति निवेदयेत्। नात्र विप्राङ्गुष्ठ-निवेशनम्। एवं पित्रादिभ्यस्तत्तन्नामाद्यूहेनाऽऽमान्नानि निवेद्य ये चेह पितर इत्यादि समानम्। संकल्पेऽनेन मम पित्रादीनाममुकश्राद्धे ब्राह्म-णेभ्य आमान्नदानेन पितृस्वरूपी जनार्दनवासुदेवः प्रीयतां न ममेति संकल्प्य गायत्रीं जपित्वा मधु वाता इति तिस्रोऽक्षन्नमीति चैकां श्राव-यित्वा संपन्नप्रश्नं कृत्वा गृहसिद्धान्नेन पायसेन सक्तुभिर्वा पिण्डदानं कुर्यात्। तत्रोपस्थानमन्त्रे विशेषः। नमो वः पितर आमद्रव्याय नमो वः पितर ऊर्जे नमो वः पितरः शुष्मायेत्यादि। विकिराण्यामद्रव्येण। शोभनं हविरित्यस्य लोपः। विसर्जनमन्त्रे वाजे०ऋतज्ञाः। अस्य मध्वः पिबत मादयध्वं तृप्स्यथ यात पथिभिर्देवयानैः। इत्यूहः। अन्यत्सर्वं पूर्ववत्। तत्तच्छ्राद्धधर्मेण पूर्वमन्तेऽपरेद्युर्वा तर्पणम्। काले वैश्वदेवादि कृत्वा भुञ्जीत। नात्र ब्रह्मचर्यादिनियमाः। इत्यामश्राद्धप्रयोगः।

अथाऽऽमाभावे हिरण्यश्राद्धम्। तत्र निमित्तानि विधिधर्मः कालः प्रयोगश्चाऽऽमश्राद्धवत्। विशेषस्तूच्यते। संकल्प आमान्नेन हविषेत्यत्र हिरण्येनेत्युल्लेखः। गृहसिद्धान्नेन पायसेन सक्तुभिर्वाऽग्नौकरणं पिण्ड-दानं प्रकिरणं च। आमद्रव्यमूल्यादष्टगुणं चतुर्गुणं द्विगुणं वाऽत्यशक्तौ समं वा हिरण्यं निधाय विश्वेभ्यो देवेभ्य इदं हिरण्यममृतरूपं स्वाहा न ममेत्यादिसंकल्पः। पिण्डोपस्थानमन्त्रे नमो वः पितरो हिरण्याय नमो वः पितर ऊर्ज इत्यूहः। अत्र श्राद्धोत्तरं तत्काल एव तिलतर्पणं कृत्वा काले वैश्वदेवादि कृत्वा भुञ्जीत। अत्र पिण्डदाने विकल्पः। अकरणे सांकल्पिकप्रयोगः। इति हिरण्यश्राद्धम्। अथ सांकल्पिक-श्राद्धम्। तच्चाशक्तेन कर्तव्यम्। तदुक्तं निर्णयसिन्धौ—

१ ग पृथिवी०। २ ग °त्वा वे°।

समग्रं यस्तु शक्नोति कर्तुं नैवेह पार्वणम् ।
अपि संकल्पविधिना काले तस्य विधीयते ॥

अन्यान्यपि निमित्तान्युक्तानि हेमाद्रौ—

संक्रान्तौ ग्रहणे पाते युगमन्वन्तरादिषु ।
भरण्यां चापि कुर्वीत श्राद्धं पिण्डं विनैव तु ॥

तत्रैव वृद्धपराशरः—

युगादिषु मघायां च विषुवत्ययने तथा ।
भरणीषु च कुर्वीत पिण्डनिर्वपणं न हि ॥

सिन्धौ गार्ग्यः—

पौर्णमासीषु सर्वासु निषिद्धं पिण्डपातनम् ।
वर्जयित्वा प्रौष्ठपदीं यथा दर्शस्तथैव सा ॥ इति ।

स्मृतिरत्नावल्याम्—

पुत्रे जाते व्यतीपाते ग्रहणे चन्द्रसूर्ययोः ।
श्राद्धं कुर्यात्प्रयत्नेन पिण्डनिर्वपणादृते ॥

हेमाद्रौ ज्योतिष्पराशरः—

विवाहे विहितान्मासांस्त्यजेयुद्वार्दशैव हि ।
सपिण्डाः पिण्डनिर्वापं मौञ्जीबन्धे षडेव हि ॥

त्रिस्थलीसेतौ कार्ष्णाजिनिः—

विवाहव्रतचूडासु वर्षमर्धं तदर्धकम् ।
पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् ॥

सिन्धौ—वृद्धिमात्रे तथाऽन्यत्र पिण्डदाननिराक्रिया ।
कृता गर्गादिभिर्मुख्यैर्मासमेकं तु कर्मिणाम् ॥

मदनरत्ने—पिण्डान्सपिण्डा नो दद्युः प्रेतपिण्डं विनाऽत्र तु ।
पितृयज्ञे च यज्ञे च गयायां दद्युरेव ते ॥

अस्य वचसोऽर्थमाह चन्द्रिकाकारः—पितृयज्ञे पिण्डपितृयज्ञे । यज्ञे पित्र्येष्ट्याम् । तत्र पिण्डान्दद्युरिति ।

सिन्धौ—मुण्डनं पिण्डदानं च प्रेतकर्म च सर्वशः ।
न जीवत्पितृकः कुर्याद्गुर्विणीपतिरेव च ॥ इति ।

तथा—पिण्डहीनं तु यच्छ्राद्धं संकल्पाख्यं प्रचक्षते ।

१ क. ख. पातयु॰ । २ क. ॰रिसर्थः । सि॰ ।

तद्विधिमाह पृथ्वीचन्द्रोदये वसिष्ठः—

आवाहनं स्वधाशब्दं पिण्डाग्नौकरणं तथा।
विकिरं चार्घ्यदानं च सांकल्पे पञ्च विवर्जयेत्॥

समन्त्रकस्याऽऽवाहनस्य निषेधः। तूष्णीं भवत्येवेति हेमाद्र्यादयः। नाक्षय्यवाचनमिति सिन्धौ। चन्द्रिकायां वृद्धशातातपः—

पिण्डनिर्वापरहितं यत्तु श्राद्धं विधीयते।
स्वधावाचनलोपोऽत्र विकिरस्तु न लुप्यते॥
अक्षय्यदक्षिणास्वस्तिसौमनस्यं यथास्थितम्। इति।

अतो विकिराक्षय्ययोर्विकल्पः। सिन्धौ स्मृत्यन्तरम्—

अङ्गानि पितृयज्ञस्य यदा कर्तुं न शक्नुयात्।
स तदा वाचयेद्विप्रान्संकल्पात्सिद्धिरस्त्विति।

अथ सांकल्पिकश्राद्धप्रयोगः। उक्तापराह्णे देशकालौ संकीर्त्य प्राचीनावीती पित्रादीनां षष्ठ्यन्तप्रयोगेणोत्कीर्तनं कृत्वैतेषां तृप्त्यर्थममुकश्राद्धं सदैवं सांकल्पिकविधिनाऽन्नेनाऽऽमान्नेन वा हविषा हिरण्येन वा सद्यः करिष्य इति संकल्प्य पूर्ववद्विप्रनिमन्त्रणादिपादप्रक्षालनान्तं कृत्वा पूर्ववदुपवेश्याऽऽवाहनार्घ्यदानवर्जमासनाद्याच्छादनान्तैरुपचारैः पूजयेत्। अथ वा तूष्णीमावाहनम्। ततोऽग्नौकरणवर्जमापोशनदानान्तं कुर्यात्। ब्राह्मणा बलिदानवर्जं विधिना भुञ्जीयुः। भोजनान्ते तृप्तिप्रश्नं कृत्वा मधुमतीरक्षन्नमीमदन्तेति च श्रावयित्वा संपन्नप्रश्नं कृत्वा शेषमन्नं किं क्रियतामित्यादि उच्छिष्टभागेभ्योऽन्नदापनान्तं कृत्वाऽऽचान्तेषु विप्रेषु प्रकिरणपक्षेऽन्नं प्रकीर्य विप्रहस्तेषु शिवा आपः सन्तु इत्यादिभिर्जलादि दत्त्वा, अघोराः पितरः सन्त्वित्यादि पूर्ववत्। अक्षय्यवाचनपक्षे तत्कृत्वा ताम्बूलदक्षिणे दत्त्वा विश्वे देवाः प्रीयन्तामित्यादिकर्मेश्वरार्पणान्ते विप्रान्प्रति वदेत्। कृतस्यामुकश्राद्धस्य संकल्पात्सिद्धिरस्त्विति भवन्तो ब्रुवन्तु। विप्रास्तथाऽस्त्विति वदेयुः। कर्ता वैश्वदेवादि कृत्वा बन्धुभिः सह श्राद्धशेषं भुञ्जीत। तर्पणं तु श्राद्धकालानुरोधेन सर्वेष्वपि श्राद्धानुकल्पेषु भवत्येव। इति सांकल्पिकश्राद्धम्। अत्यशक्तौ ब्रह्मार्पणविधिना श्राद्धं कुर्यात्। तदुक्तं पद्मपुराणे—

ब्रह्मार्पणेन विधिना कुर्याद्वा भक्तिमान्सुतः।
निमन्त्र्य ब्राह्मणाञ्शक्त्या द्व्येकं वा यथाविधि॥

7912

पादप्रक्षालनं कृत्वा पीठादावुपवेश्य च ।
परिविष्य त्यजेदन्नं ब्रह्मार्पणविधानतः ॥
गोविन्दं पुण्डरीकाक्षं गङ्गां काशीं गयां ततः ।
गदाधरं स्मरेद्भक्त्या श्राद्धसाद्गुण्यहेतवे ॥ इति ।

अथ प्रयोगः । यथाशक्ति ब्राह्मणान्निमन्त्र्य संकल्पे पितॄनुद्दिश्यै तेषां तृप्त्यर्थममुकश्राद्धं सदैवं ब्रह्मार्पणेन विधिना सद्यः करिष्य इत्युक्त्वा विप्राणां पादप्रक्षालनं कृत्वा पीठेषूपवेश्यार्घ्यावाहनवर्जं देवपितृपूजां विधायान्नं परिविष्य सावित्र्या प्रोक्ष्य विश्वेभ्यो देवेभ्य इदमन्नममृतरूपं परिविष्टं परिवेक्ष्यमाणं चाऽऽतृप्तेः स्वाहा हव्यं नमो न ममेत्येवं तत्तन्नामाद्युच्चारपूर्वकं पितृभ्यो निवेदयेत् । कव्यं नमो न ममेति मन्त्रे विशेषः । ततः, ब्रह्मार्पणं० धिना । इत्यादि पितृस्वरूपी जनार्दनवासुदेवः प्रीयतामित्यन्तं संकल्पवाक्यमुच्चार्य भुक्तवद्भ्यो यथाशक्ति ताम्बूलं दक्षिणां च दत्त्वा गोविन्देति श्लोकं पठित्वा संकल्पात्सिद्धिरस्त्विति भवन्तो ब्रुवन्त्विति वाचयित्वा कर्मेश्वरार्पणं कृत्वा वैश्वदेवादिभोजनान्तं पूर्ववदिति । इति ब्रह्मार्पणविधिना श्राद्धम् ।

संकटेऽन्येऽपि श्राद्धानुकल्पा उक्ता निर्णयसिन्धौ बृहन्नारदीये–

द्रव्याभावे द्विजाभावे अन्नमात्रं तु पाचयेत् ।
पैतृकेण तु सूक्तेन होमं कुर्याद्विचक्षणः ॥

पैतृकं सूक्तमुदीरतामित्यादि ।

देवलः—पिण्डमात्रं प्रदातव्यमभावे द्रव्यविप्रयोः ॥

वृद्धवसिष्ठः–किंचिद्दद्यादशक्तस्तु उदकुम्भादिकं द्विजे ।
किंचिदन्नं तिलान्वाऽपि दक्षिणामात्रमेव वा ॥
असमर्थोऽन्नदानस्य धान्यमात्रं स्वशक्तितः ।
तृणानि वा गवे दद्यात्पिण्डान्वाऽप्यथ निर्वपेत् ॥
तिलोदकैः पितॄन्वाऽपि तर्पयेत्स्नानपूर्वकम् ।

भविष्ये–अग्निना वा दहेत्कक्षं श्राद्धकाले समागते ॥
तस्मिंश्चोपवसेदह्नि जपेद्वा श्राद्धसंहिताम् ।

कक्षं तृणम् । श्राद्धसंहिता सर्वमन्त्रसहितः श्राद्धकल्पः । विष्णुपुराणे—

१ ग. गन्त्रशे° ।

सर्वाभावे वनं गत्वा कक्षामूलप्रदर्शकः ।
सूर्यादिलोकपालानामिदमुच्चैः पठिष्यति ॥
न मेऽस्ति वित्तं न धनं न चान्यच्छ्राद्धोपयोगि स्वपितॄन्नतोऽस्मि ।
तृप्यन्तु भक्त्या पितरो मयैतौ भुजौ कृतौ वर्त्मनि मारुतस्य ॥
प्रभासखण्डे—गत्वाऽरण्यममानुष्यमूर्ध्वबाहुर्विरौत्यदः ।
निरन्नो निर्धनो देवाः पितॄणामनृणं कुथरः ॥
ग्रन्थान्तरे—कक्षं वा प्रदहेत्काले‌ऽथवा दद्यात्फलादिकम् ।
अथवा श्राद्धदिवसे भवेन्निरशनः स्वयम् ॥
गत्वाऽथवा महारण्ये कक्षामूलं प्रदर्शयेत् ।
दक्षिणास्यो रुदेद्देवमूर्ध्वबाहुः समाहितः ॥
न मे धनं न चान्नं भोः पितरः सर्वसाक्षिणः ।
प्राप्ध्वमतुलां तृप्तिं कक्षामूलप्रदर्शनात् ॥
अवश्यं तद्दिनं नेयं येन केनापि कर्मणा ।
पूर्णं करोति भगवान्भक्त्या भक्तजनाश्रयः ॥
ततस्तु तर्पणं कार्यं श्राद्धाङ्गं विधिचोदितम् ।
अन्यथा श्राद्धवैगुण्यमङ्गहानिनिमित्ततः ॥ इति ।

अष्टकाश्राद्धकरणाशक्तावेकस्यां वा माघकृष्णाष्टम्यामष्टमीश्राद्धं कार्यमिति सिन्धौ । तस्याप्यशक्तौ शौनकः—

अन्नल्पोऽपि यथाशक्ति कुर्यादेवाष्टकां बुधः ।
योऽशक्तिक(यो ह्यशक्त?)स्तथा कर्तुं दारिद्र्येणाष्टकामिमाम् ॥
संप्रदद्यादनड्डुहे तृणान्यप्यथवाऽग्निना ।
गुल्ममेकं दहेद्देवं मेऽष्टका त्विति चिन्तयन् ॥
अष्टकासमये जीवन्नत्वेवानष्टको भवेत् ।

गुल्मं तृणस्य । अप्यनड्डुहो यवसमाहरेदग्निना वा कक्षमुपोषेदेषा मेऽष्टकेति नत्वेवानष्टकः स्यादित्याश्वलायनः ।

इति श्रीमच्चित्पावनकें० श्राद्धमञ्जर्यां श्राद्धानुकल्पाः ।

---

अथ क्षयाहश्राद्धम् । तत्स्वरूपमाह निर्णयसिन्धौ व्यासः—
मासपक्षतिथिस्पृष्टे यो यस्मिन्म्रियतेऽहनि ।
प्रत्यब्दं तु तथाभूतं क्षयाहं तस्य तं विदुः ॥

तत्राधिमासमृतानां प्रथमाब्दिकं त्रयोदशे मासे कार्यम् । मध्ये यद्यधिमासो भवेत्तदा च त्रयोदशे मासे कार्यम् । यद्यन्तेऽधिमासस्तदा तस्मिन्नेवाधिमासे कार्यम् ।

द्वितीयादिवार्षिकं तु शुद्धमास एव । अधिमासमृतानां तु यदा स एव मासोऽधिकः स्यात्तदा तत्रैवाधिमासे कार्यम् । दर्शे वार्षिकं चेत्तदा पूर्वं वार्षिकं कृत्वा ततः पिण्डपितृयज्ञो दर्शश्राद्धं चेति निर्णयदीपे स्मृतिसारे च क्रम उक्तः । कमलाकरेण तु पिण्डपितृयज्ञानन्तरं वार्षिकं कृत्वा ततो दर्शश्राद्धं कर्तव्यमिति सिद्धान्तितम् । तत्पक्षे नात्र व्यतिषङ्गो भवति । प्रवासमरणादिना क्षयाहतिथेरज्ञाने तन्मासस्य कृष्णाष्टम्यां कृष्णैकादश्याममावास्यायां शुक्लैकादश्यां वा कार्यम् । यदि तिथिर्विज्ञाता मासो न विज्ञातस्तदा मार्गशीर्षे माघे भाद्रपद आषाढे वा तत्तिथौ कार्यम् । तिथिमासयोरविज्ञाने माघे मार्गे वाऽमावास्यायां कार्यम् । अथवा प्रस्थानमासदिवसौ ग्राह्यौ । तयोरपि तिथेरज्ञाने प्रस्थानमासदर्शे कार्यम् । तिथेर्ज्ञाने मासाज्ञाने तु मार्गशीर्षादौ । उभयस्याप्यविज्ञाने मृतवार्ताश्रवणकालिकौ तिथिमासौ ग्राह्यौ । तयोरन्यतराज्ञाने प्रस्थानदिनमासवन्निर्णयः । एतयोरप्यविज्ञाने मार्गदर्शे कार्यम् । इदं चाऽऽब्दिकं कर्तुर्भार्यायां रजस्वलायां सत्यामपि सपिण्डकमन्नेनैव कार्यम् । एवं गर्भिण्यामपि । मृतस्य भार्यायां रजस्वलायामपि तथैव । सा यद्यपुत्रकस्य भर्तुः श्राद्धकर्त्री चेत्तदा पञ्चमेऽह्नि कुर्यात् । आशौचे तु आशौचनिवृत्तौ तद्दिन एव कार्यम् । तदतिक्रमे कृष्णाष्टम्यामेकादश्यां द्वादश्याममावास्यायां वा कार्यम् । क्षयाहे ग्रहणप्रसक्तौ भोक्तृसंभवे पक्वान्नेनैव कार्यम् । भोक्त्रसंभव आमेन हेम्ना वा कार्यम् । ग्रस्तोदये ग्रस्तास्ते चापि तथैव । एतन्मूलवाक्यानि निर्णयसिन्धुपराशरमाधवीयादौ द्रष्टव्यानि । श्राद्धदिने यदृतुमत्या भार्यायाः षोडश दिनं पतेत्तदा तत्र विशेषमाह वसिष्ठः—

एकादश्यां यदा राम प्रतिसंवत्सरं दिनम् ।
भार्या त्वृतुमती चैव कथं धर्मः प्रवर्तते ॥
श्राद्धं कुर्याद्धृतं कुर्यादाघ्राय पितृसेवितम् ।
ऋतुमत्या ऋतुं दद्यादर्धरात्रादनन्तरम् ॥ इति ।

१ ग 'दिनमा' ।

अत्र पित्रादिप्रत्याब्दिकश्राद्धे पार्वणैकोद्दिष्टयोः समबलत्वाद्व्रीहियववद्विकल्पः। स चाऽऽचाराद्यवस्थित इति सर्वनिबन्धकारसंमतिः। अत एव दाक्षिणात्याः पार्वणं कुर्वते मैथिलादय एकोद्दिष्टमिति चन्द्रिकाकारः। पितृव्यादीनां श्राद्धे विशेषश्चतुर्विंशतिमते—

पितृव्यभ्रातृमातॄणां ज्येष्ठानां पार्वणं भवेत्।
एकोद्दिष्टं कनिष्ठानां दंपत्योः पार्वणं मिथः॥ इति।

मातॄणां सपत्नमातॄणाम्। दाक्षिणात्यास्त्वेवमेवाऽऽचरन्तीति चन्द्रिकाकारः। अत्र भ्रातॄणामेव वयसा ज्येष्ठत्वं कनिष्ठत्वं च ज्ञेयम्। पितृव्यसापत्नमातॄणां तु वयसा कनिष्ठत्वेऽपि स्थानतो ज्येष्ठत्वात्पार्वणमेव। अतः पितृमृताहे पितृपितामहप्रपितामहांस्त्रीनुद्दिश्य पार्वणविधिना श्राद्धं कुर्यात्। मातृमृताहे मातृपितामहीप्रपितामहीरुद्दिश्य कुर्यात्। तथाऽपुत्रमातामहस्य तन्मृताहे तस्य तद्वर्गमात्रस्य। एवं मातामह्यास्तन्मृताहे तद्वर्गमात्रस्य। अपुत्रायाः सापत्नमातुस्तन्मृताहे तद्वर्गमात्रस्य। तथाऽपुत्राणां पितृव्यमातुलभ्रातॄणां मृताहे तत्तद्वर्गमात्रस्य पार्वणं कुर्यात्। कनिष्ठभ्रातॄणामविवाहितानामेकोद्दिष्टमेव। केचित्सापत्नमातृपितृव्यमातुलज्येष्ठभ्रातॄणामपुत्राणां तत्तन्मृताहे तं तमेवोद्दिश्यैकोद्दिष्टविधिना श्राद्धं कुर्यादित्याहुः। ज्येष्ठस्यापि जीवत्पितृकस्य भ्रातुरेकोद्दिष्टमेव। केचित्पार्वणमिति वदन्ति। सर्वत्र पार्वणमित्यन्ये। अत्रापि देशाचाराद्यवस्था। आचारावश्यकत्वमाह वृद्धशातातपः—

देशधर्मं समाश्रित्य वंशधर्मं तथाऽपरम्।
सूरयः श्राद्धमिच्छन्ति पार्वणं च क्षयेऽहनि॥ इति।

बृहन्नारदीयेऽपि—देशाचाराः परिग्राह्यास्तत्तद्देशीयजैर्जनैः।
अन्यथा पतितो ज्ञेयः सर्वधर्मबहिष्कृतः॥

सिन्धौ भृगुः—यस्मिन्देशे पुरे ग्रामे त्रैविद्ये नगरेऽपि वा।
यो यत्र विहितो धर्मस्तं धर्मं न विचारयेत्॥ इति।

मित्रबन्धुगुर्वाचार्यसपिण्डादीनामपुत्राणामपत्नीकानां यथाधिकारं यथाचारं पार्वणमेकोद्दिष्टं वा कार्यमिति। विद्यमाने पितरि संन्यस्ते पतिते वा तत्कर्तृकाणि दर्शाब्दिकमहालयादीन्यावश्यकानि नित्यनैमित्तिकानि श्राद्धानि तत्पुत्रेण जीवत्पितृकेणापि पितुःपित्राद्युद्देशेन कार्याणि। तदुक्तं कात्यायनेन—

ब्राह्मणादिहते ताते पतिते सङ्गवर्जिते ।
व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ ॥

सङ्गवर्जिते संन्यस्ते । व्युत्क्रमाच्च मृत इति । व्युत्क्रममृतसपिण्डीकरणाभावपक्षे तस्य संप्रदानत्वायोग्यत्वाद्येभ्यः पिता स्वपितृजीवनेन स्वपितामहादिभ्यो ददौ तेभ्यः स्वयं पुत्रो दद्यादित्यर्थः । तथाऽपुत्रकाणां सापत्नमातृमातामहभ्रातृपितृव्याणां क्षयाहश्राद्धं जीवत्पितृकेणापि कर्तव्यम् । एतद्विस्तरो रामकृष्णभट्टकृते जीवत्पितृकनिर्णये द्रष्टव्य इत्यन्यत्र विस्तर इति दिक् ।

अथैकोद्दिष्टश्राद्धकालः । तदाह माधवीये व्यासः—

कुतपप्रथमे भाग एकोद्दिष्टमुपक्रमेत् ।
आवर्तनसमीपे वा तत्रैव नियतात्मवान् ॥

एकोद्दिष्टं तु मध्यत इति हारीतः । मध्यतो मध्याह्न इत्यर्थः । मध्याह्नश्च पञ्चधाविभक्तदिनतृतीयभाग इति माधवः । एकोद्दिष्ट इति कर्तव्यतोक्ता याज्ञवल्क्येन—

एकोद्दिष्टं दैवहीनमेकार्घ्यैकपवित्रकम् ।
आवाहनाग्नौकरणरहितं त्वपसव्यवत् ॥ इति ।

आश्वलायनानां त्वेकोद्दिष्टेऽप्यग्नौकरणादयः पदार्था भवन्त्येव । तद्गृह्यसूत्रे पार्वणादिचतुर्ष्वप्यग्नौकरणादीनां साम्येनोक्तेरिति चन्द्रिकाकारः । देवराहित्यादियाज्ञवल्क्योक्ता धर्मा भवन्त्येव । सूत्राविरुद्धत्वात् ।

अथाऽऽब्दिकश्राद्धप्रयोगः । देशकालकीर्तनान्तेऽस्मत्पितृपितामहप्रपितामहानाममुकशर्मणाममुकगोत्राणां वसुरुद्रादित्यस्वरूपाणामेतेषां तृप्त्यर्थं प्रत्याब्दिकश्राद्धं सदैवं सपिण्डं पार्वणेन विधिनाऽन्नेन हविषा श्वः सद्यो वा करिष्य इति संकल्पपूर्वकं दर्शश्राद्धोक्तविधिना तद्वर्गमात्रस्यैव कुर्यात् । अस्मिञ्श्राद्धदिने नित्यतर्पणं तिलरहितं कार्यम् । श्राद्धाङ्गतर्पणं तु परेद्युः स्नानं प्रातःसंध्यां च कृत्वा सतिलमेव । श्राद्धेज्यवर्गस्य तर्पणं कृत्वा पुनः सर्वकर्मार्थं स्नानं कृत्वाऽवशिष्टमाह्निकं कुर्यादिति । यदा विघ्नवशात्क्षयाहे दिवा श्राद्धं न जातं तदा रात्रावपि कार्यमिति कमलाकरः । प्रथमे संवत्सरेऽतीते क्षयाहदिने यच्छ्राद्धं तत्प्रथमाब्दि॰

१ ग स्वस्य जीवत्पितृकत्वात्स्वपि॰ । २ ग. ॰पुत्राणा । ३ ग ॰द्दिष्टेति॰ । ४ ख. ग साम्यश्रोक्ते॰ । ५ ग ॰वर्गेऽब्दे (गोऽह्) शेन इ॰ । ६ क. ख दिवसे ।

कम् । द्वितीये वत्सरेऽतीते द्वितीयाब्दिकम् । तृतीये वत्सरेऽतीते तृतीयाब्दिकम् । तदूर्ध्वं प्रत्याब्दिकमिति ।

अथ मातृश्राद्धे विशेषः । चन्द्रिकायां स्मृत्यन्तरे—

भर्तुरग्रे मृता नारी सह या तेन या मृता ।
तस्याः स्थाने नियुञ्जीत विप्रैः सह सुवासिनीम् ॥ इति ।

अथ प्रयोगः । देशकालकीर्तनान्तेऽस्मन्मातृपितामहीप्रपितामहीनाममुकदानाममुकगोत्राणां वसुरुद्रादित्यस्वरूपाणामेतासां तृप्त्यर्थं प्रत्याब्दिकश्राद्धं सदैवं सपिण्डं पार्वणेन विधिनाऽन्नेन हविषा सद्यः करिष्य इति संकल्प्य दर्शश्राद्धोक्तविधिना तद्वर्गमात्रस्यैव कुर्यात् । निमन्त्रणादिषु मात्रादिनामाद्युल्लेखः । मात्राद्यर्घ्यपात्रेषु तिलायापे तिलोऽसि सोमदेवत्य इत्यस्मिन्मन्त्रे पितॄनित्यस्य पदस्य नोहः । यथाश्रुतमेव पाठः । एवमुत्तरेष्वपि मन्त्रेषु साधारणपितृशब्दस्य नोहः । यत्रोहप्रसक्तिस्तत्प्रदर्श्यते । पात्राभिमर्शने मातृपात्रं संपन्नम् । पितामहीपात्रं संपन्नम् । प्रपितामहीपात्रं संपन्नमित्यूहः । अस्मन्मातृपितामहीप्रपितामह्यः दाः गोत्राः वसुरुद्रादित्यस्वरूपा भवत्स्यावाहयिष्यामि । इत्यावाहने । मातरिदं तेऽर्घ्यम् । पितामहीदं तेऽर्घ्यम् । प्रपितामहीदं तेऽर्घ्यमित्यर्घ्यदाने मन्त्राः । अर्घ्यपात्रासादने मातृभ्यः स्थानमसीतिमन्त्रः । अस्मन्मातृपितामहीप्रपितामह्यो दाः गोत्राः वसुरुद्रादित्यस्वरूपा एष वो गन्ध इत्याद्यर्चनम् । सति संभवे सधवाया मातुर्मृतायाः स्थाने विप्रपङ्क्तौ सुवासिनीमुपवेश्यास्मन्मातुः, गङ्गादायाः काश्यपगोत्राया वसुरूपाया इदमासनम् । अस्मन्मातः, गङ्गादे काश्यपगोत्रे वसुरूप एष ते गन्ध इति सुवासिन्यै गन्धं दत्त्वा हरिद्राकुङ्कुमसिन्दूरादि दत्त्वा पुष्पधूपदीपान्समर्प्याऽऽच्छादनार्थं स्त्रीपरिधानयोग्यं नवं श्वेतं वस्त्रं कञ्चुकीसहितं दद्यात् । मातृश्राद्धेऽपि ब्राह्मणेभ्यो यज्ञोपवीतानि दद्यादिति हेमाद्रिः । अन्ननिवेदने पात्रालम्भनादि कृत्वा माताऽमुकदाऽमुकगोत्रा वसुरूपा देवतेदमन्नं हवि० अस्मन्मात्रेऽमुकदायै गोत्रायै वसुरूपाया इदमन्नममृतरूपं० पितामही अमु० देवता० पितामह्यै दायै० इदमन्न० प्रपितामही अमुक० देवता० प्रपितामह्यै दायै इदमन्न० तिसृणामेकब्राह्मणपक्षेऽस्मन्मातृपितामहीप्रपितामह्योऽमुकदा गोत्रा रूपा देवता इदमन्नं हवि० अस्मन्मातृपितामहीप्रपितामहीभ्योऽमुकदाभ्यो गोत्राभ्यो रूपाभ्य इद-

१ क. ख. 'दार्थमे'।

मन्नममृतरूपं० इति यथार्थमूहः । ततः सुवासिनीपात्रस्थमन्नं प्रोक्ष्य मात्रे दायै गोत्रायै वसुरूपाया इदमन्नममृतरूपं परिविष्टं परिवेक्ष्यमाणं चाऽऽ तृप्तेः स्वधा कव्यं नमो न ममेति निवेदयेत् । मात्रादिद्वयोः सुवासिन्योर्मृतौ द्वे सुवासिन्यौ भोजयेत् । तिसृणां तथात्वे तिस्रः । अशक्तौ सर्वासां स्थान एकां वा सुवासिनीं भोजयेत् । अनेन मम मात्रादीनां प्रत्याब्दिकश्राद्धे ब्राह्मणसुवासिनीभोजनेन मातृस्वरूपी जनार्दनवासुदेवः प्रीयताम् । इति संकल्पः । तृप्तिप्रश्ने मातरस्तृप्ताः । स्थेत्यूहः । मातृतृप्त्यर्थं पिण्डप्रदानं करिष्य इत्यादि । उदकं निनयेत् । शुन्धन्तां मातरः शुन्धन्तां पितामह्यः शुन्धन्तां प्रपितामह्य इत्यूहः । पिण्डदान एतत्तेऽस्मन्मातरमुकदेऽमुकगोत्रे वसुरूपे ये च त्वामत्रानु तेभ्यश्चेति मन्त्रः । एव मुत्तरयोर्मातरमुकदे॰ गोत्रे रूपेऽभ्यङ्क्ष्वेत्याद्यभ्यञ्जनम् । अङ्क्ष्वेत्यञ्जनम् । अत्र पितरो मादयध्वम्० अमीमदन्त पितरः० एतद्वः पितरो० नमो वः पितर इषे० मनो न्वाहुवामहे० परेतन पितरः० वीरं मे दत्त पितरः । आधत्त पितरः० एषु मन्त्रेषु नोहः । यथाश्रुतमेव पाठः । अघोरा मातरः सन्तु इत्यूहः । विप्रेभ्यो दक्षिणादानान्ते सुवासिन्यै दक्षिणां दत्त्वा सति संभवे कण्ठसूत्रादिनानालंकारान्दद्यात् । मातरः प्रीयन्तामिति भवन्तो ब्रुवन्तु । उत्तिष्ठत मातरो विश्वदेवैः सह । अनेन मातुः प्रत्याब्दिकश्राद्धयज्ञेन भगवान्मातृस्वरूपी० इत्यूहः । अन्यत्सर्वं पितृश्राद्धवत् । तर्पणेऽस्मन्मातरमित्याद्यूहः । सधवाया मातुर्मृतायाः श्राद्धं जीवत्पितृकेणापि सपिण्डकं कार्यं वचनात् । सापत्नमातुरपि तथैव । तर्पणं तु तिलरहितं केवलजलेन कार्यम् । शुक्लतिलैरिति केचित् । एवमेवापुत्रायाः सापत्नमातुः श्राद्धप्रयोगः । तत्र मातृस्थाने सापत्नमातुरुल्लेखः । अस्मत्सापत्नमातृपितामहीप्रपितामहीनामित्यादि । एवं पितामह्यादिश्राद्धेष्वपि । पत्नीश्राद्धे तु अस्मत्पत्नीमातृपितामहीनामित्युच्चारणम् । मातामहश्राद्धेऽस्मन्मातामहमातुःपितामहमातुःप्रपितामहानाम् । पितृव्यश्राद्धेऽस्मत्पितृव्यपितामहप्रपितामहानाम् । मातुलश्राद्धे मातुलमातामहमातुःपितामहानाम् । भ्रातृश्राद्धे भ्रातृपितृपितामहानामित्यादि संकल्पादौ तत्तद्विभक्त्योच्चारणम् । विधिस्तु पितृश्राद्धवत् । ऊहपदेषु पित्रादिस्थाने मातामहादिशब्दः प्रयोज्यः । मयूखे दक्षः—

ज्येष्ठभ्रातृपितृव्येष्टसपत्नीमातरस्तथा ।
एतेषां च मृताहे तु परेऽहनि तिलोदकम् ॥ इति ।

१ ग. ॰व्दद॰ । २ क. ग. ॰र्थायमे॰ । ३ ग. विप्राणा द॰ ।

अथान्वारोहणश्राद्धप्रयोगः। श्राद्धदिने पितृश्राद्धार्थं मातृश्राद्धार्थं च पाकद्वयं संपाद्याऽऽपत्तावोदनभेदमात्रं कृत्वैकेनैव पाकेन वाऽपराह्णे देशकालकथनान्तेऽस्मत्पितृपितामहप्रपितामहानां शर्मणां गोत्राणां वसुरुद्रादित्यस्वरूपाणामस्मन्मातृपितामहीप्रपितामहीनाममुकदानां गोत्राणां वसुरुद्रादित्यस्वरूपाणामेतेषां तृप्त्यर्थं प्रत्याब्दिकश्राद्धं सदैवं सपिण्डं पार्वणेन विधिनाऽन्नेन हविषा तन्त्रेण सद्यः करिष्य इति संकल्प्य तन्त्रेणैव वैश्वदेवविप्रनिमन्त्रणं कृत्वा पितृवर्गार्थं विप्रत्रयं मातृवर्गार्थं च विप्रत्रयं प्रतिवर्गमेकैकं वा निमन्त्र्य सर्वं दर्शश्राद्धवत्कुर्यात्। सति संभवे विप्रपत्नी मात्रर्थं सुवासिनीमुपवेश्य संपूज्य भोजयेत्। वर्गद्वयस्य दर्शवत्पृथक्पिण्डदानम्। तिथिभेदे पृथक्पिण्डदानम्। तिथ्येकत्वे तु द्वयोर्द्विवचनोहेनैकः पिण्डो देय इति केचित्। परेऽहनि वर्गद्वयस्य तिलतर्पणम्। इति सहगमनश्राद्धप्रयोगः।

पितामहे जीवति पितुः श्राद्धे पितृप्रपितामहवृद्धप्रपितामहानां श्राद्धं कुर्यात्। प्रपितामहे जीवति पितृपितामहप्रवृद्धप्रपितामहानाम्। उभयोर्जीवतोः पितृवृद्धप्रपितामहप्रवृद्धप्रपितामहानाम्। एवं मातामह्यादीनामपि जीवत्वे ज्ञेयम्।

आशौचादिना मृताहातिक्रमे देशकालकथनान्ते तद्वर्गस्य षष्ठ्यन्तमुच्चारणं कृत्वाऽतिक्रान्तमाब्दिकश्राद्धं करिष्य इति संकल्प्य सर्वं पूर्वोक्तवत्कृत्वा श्वोभूते तिलतर्पणं कुर्यात्। इत्यतिक्रान्तश्राद्धप्रयोगः।

अथैकोद्दिष्टश्राद्धप्रयोगः। मध्याह्न एव देशकालकीर्तनान्तेऽस्मत्पितृव्यस्यामुकशर्मणोऽमुकगोत्रस्य वसुरूपस्य तृप्त्यर्थं प्रत्याब्दिकश्राद्धं सपिण्डमेकोद्दिष्टविधिनाऽन्नेन हविषा सद्यः करिष्य इति संकल्प्य पितृव्यार्थमेव ब्राह्मणान्ब्राह्मणं वा निमन्त्र्यार्घ्यपात्रासादनात्प्राक्तनं सर्वं दर्शवत्कृत्वैकमर्घ्यपात्रं संस्थाप्यैकदर्भमयपवित्रान्तर्हितेऽप आसिच्येत्याद्यावाहनवर्जमर्घ्यदानान्तं कृत्वा तत्पात्रं शुचौ देशे पितृभ्यः स्थानमसीति न्युब्जं कृत्वाऽग्नौकरणं च कृत्वा पिण्डदानकाल एक एव पिण्डः। अन्यत्सर्वमविकृतं दर्शश्राद्धवत्। द्वितीयेऽहनि श्राद्धाङ्गं सतिलतर्पणम्।

एवं मातुलभ्रात्रादीनां तत्तच्छब्दोहेन प्रयोगो ज्ञेयः। सापत्नमातुरपि तथैव। तत्र संभवे सुवासिनीं भोजयेदिति विशेषः। इत्येकोद्दिष्टश्राद्धप्रयोगः।

अथ संन्यासिनामाब्दिकश्राद्धप्रयोगः । तत्र देशकालोत्कीर्तनान्तेऽस्मत्पितुरमुकशर्मणो ब्रह्मीभूतस्यामुकगोत्रस्य वसुरूपस्यास्मत्पितामहस्य प्रपितामहस्येत्येवं पूर्ववदुच्चार्यैतेषां तृप्त्यर्थं प्रत्याब्दिकश्राद्धं सदैवं सपिण्डं पार्वणेन विधिनाऽन्नेन हविषा सद्यः करिष्ये । समुदितोच्चारणपक्षेऽस्मद्ब्रह्मीभूतपितृपितामहप्रपितामहानाममुकामुकशर्मणामित्यादि । मन्त्रव्यतिरिक्तस्थले सर्वत्र नामोच्चारणे ब्रह्मीभूतपदोच्चारणमधिकम् । मन्त्रेषु स्वभिध्यानमात्रम् । अन्यत्सर्वं पार्वणश्राद्धवत् । पितामहप्रपितामहयोर्द्वयोरेकस्य वा यतित्वे तन्नामोच्चारणेऽपि ब्रह्मीभूतपदोच्चारणम् । एवमन्येष्वपि श्राद्धेषु । आब्दिकश्राद्धानन्तरं तदानीमेवापरेद्युर्वा गुरोराराधनं कुर्यात् । तत्रैवं प्रयोगः । प्रातर्होमानन्तरं ब्रह्मीभूतस्य गुरोः समाराधाने गुर्वर्थे भवद्भिः क्षणः कर्तव्यः । ब्रह्मीभूतस्य गुरोः समाराधने परमगुर्वर्थे भवद्भिः क्षणः कर्तव्यः । ब्रह्मी० धने परमेष्ठीगुर्वर्थे भव० ब्रह्मी० धने परात्परगुर्वर्थे भव०र्तव्यः । एवं विप्रचतुष्टयं निमन्त्र्य [ *यद्वा विश्वरूपधराचार्यार्थे भवद्भिः क्षणः कर्तव्यः । तत्र गुरुत्रयमिति वा चतुरो ब्राह्मणान्निमन्त्रयेत् । ] ततः शुक्लपक्षे दिवं गतस्य ब्रह्मीभूतस्य गुरोः समाराधने केशवार्थे भवद्भिः क्षणः कर्तव्यः । एवं सर्वत्र नारायणार्थे०माधवार्थे० गोविन्दार्थे० विष्णवर्थे० मधुसूदनार्थे० त्रिविक्रमार्थे० वामनार्थे० श्रीधरार्थे० हृषीकेशार्थे० पद्मनाभार्थे० दामोदरार्थे० । कृष्णपक्षे संकर्षणार्थे०वासुदेवार्थे० प्रद्युम्नार्थे०अनिरुद्धार्थे०पुरुषोत्तमार्थे०अधोक्षजार्थे०नारसिंहार्थे० अच्युतार्थे०जनार्दनार्थे०उपेन्द्रार्थे०हर्यर्थे०कृष्णार्थे०इति केशवाद्यर्थे संकर्षणाद्यर्थे वा द्वादश । एवं षोडश विप्रान्यतीन्वा मिश्रितान्वा निमन्त्र्य मध्याह्ने तानाहूय तेषां स्नानादि विधाय स्वयं स्नातः शुचिराचम्य पवित्रपाणिः प्राणानायम्य देशकालौ संकीर्त्य श्रीनारायणप्रीत्यर्थं ब्रह्मीभूतस्य गुरोराराधनं करिष्य इति संकल्प्य गन्धाक्षततुलसीकर्पूरमिश्रितजलैर्विप्राणां पादप्रक्षालनं कृत्वा तानाचमय्य (चाम्य) स्वयं चाऽऽचम्य विप्रान्प्राङ्मुखानुदङ्मुखान्वोपवेश्य पादप्रक्षालनोदकं पात्रान्तरे गृहीत्वा तत्पात्रं गन्धादिभिरलंकृत्य देवसंनिधौ स्थापयेत् । ततो विप्राणां प्रत्येकं गन्धपुष्पतुलसीदलैः पादावभ्यर्च्य

* धनुश्चिह्नान्तर्गतो ग्रन्थो ग. पुस्तक एव ।

१ ग. °कालकी° । २ ग. सिद्धि । ३ ग. °धानान्त स्व° । ४ ग. °नरर्णक्रमेण वि° ।

आनन्दमानन्दकरं प्रसन्नं ज्ञानस्वरूपं निजबोधरूपम् ।
योगीन्द्रमीड्यं भवरोगवैद्यं श्रीमद्गुरुं नित्यमहं नमामि ॥

इति नमस्कुर्यादिति केचित् । कुशासने प्राङ्मुखानुदङ्मुखान्वोपवि(वे)श्य ततः पुरुषसूक्तेन प्रत्यृचम् । ॐ नमो नारायणायेति मन्त्रमुक्त्वा विप्रान्काण्डानुसमयेन पदार्थानुसमयेन वाऽर्चयेत् । गन्धपुष्पधूपदीपाच्छादनैः पञ्चोपचारैर्वा पूजयेत । इदं विष्णुर्वि०गुरुभ्यो नमः । केशवादिभ्यो नमः । आसनादिअन्नगन्धपुष्पधूपदीपाच्छादनान्ताः सर्वे परिपूर्णा भवन्तु । अर्चनविधे० न्यूनं वि०यस्य स्मृत्या च० मण्डलादि करिष्ये । पात्राण्यासाद्याभिघार्य ततः सर्वेषु पात्रेषु पायसादिविशिष्टमन्नं व्यञ्जनादियुक्तं साज्यं सोपस्करं परिविष्य गायत्र्या प्रोक्ष्य गुरव इदमन्नं परिविष्टं परिवेक्ष्यमाणं चाऽऽ तृप्तेः स्वाहा । एवमुत्तरत्र । परमगुरव इदमन्नं०२ परमेष्ठिगुरव इदमन्नं०३ परात्परगुरवे०४ केशवायेदमन्नं०५ नारायणाये०६ माधवाये० ७ गोविन्दाये० ८ विष्णवे० ९ मधुसूदनाय० १० त्रिविक्रमाय० ११ वामनाय० १२ श्रीधराय० १३ हृषीकेशाय० १४ पद्मनाभाय० १५ दामोदरायेदमन्नं० १६ । कृष्णे केशवादिस्थाने संकर्षणायेदमन्नं०५ वासुदेवाय० ६ प्रद्युम्नाय० ७ अनिरुद्धाय० ८ पुरुषोत्तमाय०९ अधोक्षजाय० १० नारसिंहाय० ११ अच्युताय० १२ जनार्दनाय० १३ उपेन्द्राय० १४ हरये० १५ श्रीकृष्णाय० १६ इत्यन्ननिवेदनं कृत्वा । ॐ तद्ब्रह्म । ॐ तद्वायुः । ॐ तदात्मा । ॐ तत्सत्यम् । ॐ तत्सर्वम् । ॐ तत्पुरोर्नमः । अन्तश्चरति भूतेषु गुहायां विश्वमूर्तिषु । त्वं यज्ञस्त्वं वषट्कारस्त्वमिन्द्रस्त्व* रुद्रस्त्वं विष्णुस्त्वं ब्रह्म त्वं प्रजापतिः । त्वं तदाप आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः सुवरोम् । इत्यनुवाकं जपित्वा ब्रह्मार्पणं० इत्यादि ब्रह्मार्पणं कृत्वा(ऽ*नेन ब्रह्मीभूतस्य गुरोः समाराधनेन ब्राह्मणभोजनेन भगवान्नारायणः प्रीयताम् । ॐ तत्सद्ब्रह्मार्पणमस्तु । यथासुखं जुषध्वम् । अमृतं भुञ्जीताम् (ञ्जीत) । अमृतोपस्तरणमसि । श्रद्धायां प्राण इत्यादि । अपेक्षितं याचि० ) भुञ्जानानुपनिषद्भागमन्त्राञ्श्रावयेत् । तृप्तेषु ॐ तद्ब्रह्मेत्यनुवाकं जपित्वा विप्रैरुत्तरापोशनादिशुद्ध्याचमनान्तं कारयित्वा पुनरासनेषूपवेश्य ताम्बूलदक्षिणावस्त्रालंकारादिभिः

* अयं मन्त्रो ग. पुस्तक एव ।

१ ग. °त्वरुद्र° ।

परितोष्य तीर्थपूजनं कुर्यात् । तद्यथा । गुर्वांगधनाङ्गभूतं तीर्थपूजां (जनं)करिष्य इति संकल्प्य चतुरस्रं मण्डलं गोमयेनोपलिप्य परितो रङ्गवल्ल्यादिभिरलंकृत्य मण्डले धान्यराशिं कृत्वा तदुपरि पूर्वस्थापित- पादोदककलशं संस्थाप्य तत्र गङ्गादिसर्वतीर्थानि भावयित्वा पुरुषसूक्तेन प्रत्यृचं तीर्थराजाय नम इत्युक्त्वा षोडशोपचारैरभ्यर्च्य तत्पात्रं शिरसि धृत्वा ॐ लोकः सरस्वत्यायान्त्येष वै देवयानः पन्थास्तमेवान्वारोह- न्त्याक्रोशन्तो यान्त्यवर्तिमेवान्यास्मिन्प्रतिपज्य प्रतिष्ठां गच्छन्ति. यदा दशशतं कुर्वन्त्यथैकमुत्थानꣳ शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रतितिष्ठन्ति यदा शतꣳ सहस्रं कुर्वन्त्यथैकमुत्थानꣳ सहस्रसंमितो वा असौ लोकोऽमुमेव लोकमभिजयन्ति यदैषां प्रमीयेत यदा वा जीयेरन्न- थैकमुत्थानं तद्धि तीर्थम् । इत्यनुवाकशेषम् । ॐ भीषाऽस्माद्वातः पवते । भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चम इति । सैषाऽऽनन्दस्य मीमाꣳसा भवति । युवा स्यात्साधु युवा ध्यायकः । आशिष्ठो दृढिष्ठो बलिष्ठः । तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् । स एको मानुष आनन्दः । ते ये शतं मानुषा आनन्दाः । स एको मनु- ष्यगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं मनुष्यग- न्धर्वाणामानन्दाः । स एको देवगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकाम० ते ये शतं देवगन्धर्वाणामानन्दाः । स एकः पितृणां चिरलोकलोकाना- मानन्दः । श्रोत्रियस्य चा० । ते ये शतं पितृणां चिरलोकलोकानामा- नन्दाः । स एक आजानजानां देवानामानन्दः । श्रोत्रियस्य चा० । ते ये शतमाजानजानां देवानामानन्दाः । स एकः कर्मदेवानां देवानामानन्दः । ये कर्मणा देवानपियन्ति । श्रोत्रियस्य चा० । ते ये शतं कर्मदेवानां देवानामा- नन्दाः । स एको देवानामानन्दः । श्रोत्रियस्य चा० । ते ये शतं देवानामा- नन्दाः । स एक इन्द्रस्याऽऽनन्दः । श्रोत्रियस्य० । ते ये शतमिन्द्रस्याऽऽ- नन्दाः । स एको बृहस्पतेरानन्दः । श्रोत्रिय० । ते ये शतं बृहस्पतेरानन्दाः । स एकः प्रजापतेरानन्दः । श्रोत्रिय० । ते ये शतं प्रजापतेरानन्दाः । स एको ब्रह्मण आनन्दः । श्रोत्रिय० । स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । स य एवंवित् । अस्माल्लोकात्प्रेत्य । एतमन्नमयमात्मानमुपसं- क्रामति । एतं प्राणमयमात्मानमुपसंक्रामति । एतं मनोमयमात्मानमुप- संक्रामति । एतं विज्ञानमयमात्मानमुपसंक्रामति । एतमानन्दमयमात्मान- मुपसंक्रामति । तदप्येष श्लोको भवति—

१ क. ख. 'पितृ पा'।

यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चनेति। एतꣳह वाव न तपति। किमहꣳ साधु नाकरवम्। किमहं पापमकरवमिति। स य एवं विद्वानेते आत्मानꣳ स्पृणुते। उभे ह्येवैष एते आत्मानꣳ स्पृणुते। य एवं वेद। इत्युपनिषत्। इत्यनुवाकं च जपित्वा हरिकीर्तनपुरःसरसहर्षनृत्यं कृत्वा तत्पात्रं पुनर्मण्डले संस्थाप्य चन्दनाक्षतपुष्पाणि पूजां कृत्वाऽवशिष्टानि बन्धुभिः सह स्वयं धृत्वा विप्रान्प्रदक्षिणीकृत्य, आनन्दमानन्दकरं प्र० मि।

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः।
गुरुरेक(कः) परं ब्रह्म तस्मै श्रीगुरवे नमः॥

इत्यादिमन्त्रैर्विप्रांस्तीर्थराजं च नमस्कृत्य गुर्वर्थविप्रहस्ते पादोदककलशं दत्त्वा तदाज्ञया तत्तीर्थं मन्त्रेण गृह्णीयात्। तत्र मन्त्रः—

अविद्यामूलशमनं सर्वपापप्रणाशनम्।
गुरुपादोदकं चित्रं संसारद्रुमनाशनम्॥

पुत्रादिकामनायां तु—

शोषणं पापपङ्कस्य दीपनं ज्ञानतेजसः।
गुरुपादोदकं चित्रं पुत्रपौत्रप्रवर्धनम्॥

इति मन्त्रेण गृह्णीयात्। ततो विप्रान्प्रणम्यं तानन्यांश्च दक्षिणालंकारादिभिस्तोषयित्वा सन्मानपुरःसरंताननुव्रज्य कर्मेश्वरार्पणं कृत्वा सुहृद्युतो भुञ्जीतेति। इत्थं विस्तरेणाऽऽराधनकरणाशक्तौ यथाशक्ति ब्राह्मणानाहूय पादप्रक्षालनपूर्वकं गन्धादिभिरष्टाक्षरमन्त्रेणाभ्यर्च्य ब्रह्मीभूतगुरूद्देशेन भोजयेदिति। सकृन्महालयश्राद्धानन्तरमप्येवमेवाऽऽराधनम्। इदमाराधनं चतुर्विधानामपि संन्यासिनां समानमेव। चतुर्विधा भिक्षवस्तूक्ताश्चन्द्रिकायाम्—

चतुर्विधा भिक्षवस्तु विख्याता ब्रह्मणो मुखात्।
कुटीचको बहूदको हंसश्चैव तृतीयकः॥
चतुर्थः परहंसश्च संज्ञाभेदैः प्रकीर्तिताः॥ इति।

एषां लक्षणानि तत्रैव ज्ञेयानि। इति संन्यासिनामाराधनप्रयोगः।

अथ विधवाकर्तृकश्राद्धम्। स्मृतिसमुच्चये—

---

१ क ख °सर ह°। २ फ ग °गि पूनाव°। ३ ग तत्तं तीर्थम°। ४ क ख भ्य द°। ५ ग °क्रियती प्राप्त°। ६ क ख °रम्य°। ७ ग °ति। इ°। ८ ग रमदमश हा°।

स्वभर्तृप्रभृतित्रिभ्यः स्वपितृभ्यस्तथैव च ।
विधवा कारयेच्छ्राद्धं यथाकालमतन्द्रिता ॥ इति ।

इदं च षड्दैवत्यं दर्शश्राद्धादिविषयमिति मयूखे चन्द्रिकायां च । तीर्थमहालयादौ तु स्मृतिसंग्रहे—

चत्वारि पार्वणानीह विधवायाः सदैव हि ।
स्वभर्तृश्वशुरादीनां मातापित्रोस्तथैव च ॥
ततो मातामहानां च श्राद्धदानमुपक्रमेत् ॥ इति ।

अत्र मातामहादयः सपत्नीका ज्ञेयाः । सपत्न्यां मृतायां भर्त्रादयोऽपि सपत्नीकाः । श्वश्रूजीवत्वे तु सपत्न्या भर्तृपार्वणोत्तरमेकोद्दिष्टम् । केचित्पट्पार्वणात्मकमष्टादशदैवत्यमिति वदन्ति । श्वश्रूणां च विशेषेण मातामह्यास्तथैव चेति वचनात् । शक्तौ सत्यां स्वपितृव्यादीनामप्येकोद्दिष्टानि कर्तव्यानीति मयूखादौ । अत्र यथाचारं व्यवस्था ।

अथ प्रयोगः । श्राद्धकर्त्री श्राद्धदिने देशकालौ स्मृत्वोत्तरीयवस्त्रेण प्राचीनावीतं कृत्वाऽस्मद्भर्तृतत्पितृतत्पितॄणाममुकशर्मणाममुकगोत्राणां वसुरुद्रादित्यस्वरूपाणामेतेषां तृप्त्यर्थं प्रत्याब्दिकश्राद्धं सदैवं सपिण्डं पार्वणेन विधिनाऽन्नेन हविषा सद्यः करिष्ये । दर्शादौ तु भर्तृवर्गोच्चारणानन्तरम् । अस्मत्पितृपितामहप्रपितामहानां शर्मणां गोत्राणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणामित्युल्लेखः । तीर्थमहालयादौ तु अस्मद्भर्तृसपत्नीकतत्पितृतत्पितृणां शर्मणां गोत्राणां वसु०पाणाम् । अस्मत्पितृपितामहप्रपितामहानां शर्मणां० । अस्मन्मातृपितामहीप्रपितामहीनाममुकदानाममुकगोत्राणां सपत्नीकानां वसुरुद्रादि० पाणाम् । अस्मन्मातामहमातुःपितामहमातुःप्रपितामहानाममुकशर्मणाममुकगोत्राणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणामेतेषां तृप्त्यर्थं०इत्युल्लेखः । अथवा भर्त्रादित्रयाणामपि सपत्नीकानामुल्लेखः । मयूखे तथैव दर्शनात् । षट्पार्वणपक्षे भर्तृपार्वणानन्तरम् । अस्मच्छ्वश्रूतच्छ्वश्रूतच्छ्वश्रूणाममुकदानां गोत्राणां वसु०णाम् । पितृमातृमातामहपार्वणानन्तरम् । अस्मन्मातामहीमातुःपितामहीमातुःप्रपितामहीनाममुकदानाममुकगोत्राणां वसु०पाणाम् । अस्मिन्पक्षे भर्तृवर्गस्य सपत्नीरहितस्योल्लेखं कृत्वा, अस्मत्सपत्न्या अमुकदाया गोत्राया वसुरूपाया इत्युल्लेखः । एकोद्दिष्टानां करणपक्षे—

१क. ख. °ह्य प°।

अस्मत्पुत्रस्यास्मत्कन्याया अस्मत्पितृव्यस्यास्मन्मातुलस्यास्मद्भ्रातुरित्यादि यथाधिकारमुल्लेखं कृत्वाऽमुकश्राद्धं करिष्य इति स्वयं संकल्पं कृत्वा कंचिद्ब्राह्मणमृत्विक्त्वेन परिकल्प्य तं ब्रूयात्। ममाऽऽज्ञया त्वमिदममुकश्राद्धाख्यं कर्म कुरु इति। कर्ता करिष्यामीत्युक्त्वा सर्वमपि समन्त्रकं श्राद्धविधिं कुर्यात्। तत्र विशेषः। अनुज्ञाकर्त्र्या भर्तुरमुकशर्मणः०तत्पितुरमुकशर्मणः०तत्पितुरमुकशर्मणः०। अनुज्ञाकर्त्र्याः पितुरित्यादि तत्तद्विभक्त्यूहेन प्रयोगः। ऋत्विक्कर्मकाले तद्यज्ञोपवीतित्वेऽनुज्ञात्र्याऽपि यज्ञोपवीतिता कर्तव्या। तत्प्राचीनावीतित्वे तया प्राचीनावीतिता कर्तव्या। तर्पणं तु विधवाकर्तृकमेव। श्राद्धकर्तृनियमास्तु ऋत्विजोऽनुज्ञाकर्त्र्याश्च समानाः। अथवा विधवा स्वयमेव वैदिकमन्त्रवर्जं सर्वं विधिं कुर्यात्। मन्त्रसाध्यं कर्मापि तूष्णीं कर्तव्यमेव। ब्राह्मणद्वारा श्राद्धप्रयोगेऽपि मन्त्ररहितः प्रयोग इति बहवः। क्षयाह एकोद्दिष्टपक्षे तद्धर्मेण श्राद्धं कुर्यात्। कन्यायाः स्वपितृश्राद्धप्रसक्तावप्येवमेव विधिः। अपुत्रस्य विधवा पत्नी नित्यतर्पणमपि कुर्यात्।

तर्पणं प्रत्यहं कार्यं भर्तुः कुशतिलोदकैः।
तत्पितुस्तत्पितुश्चापि नामगोत्रादिपूर्वकम्॥

इति स्कान्दोक्तेः। अपुत्रा पुत्रवत्पत्नी पुत्रकर्म समाचरेत्। इति वचनात्। यदि विधवा पूर्ताादौ वृद्धिश्राद्धं करोति तदा स्वभर्तृप्रभृतित्रयाणां स्वमात्रादितिसृणां स्वपित्रादित्रयाणां स्वमातामहादित्रयाणां सपत्नीकानां स्वयं प्रतिनिधिद्वारा वा कुर्यात्। इति याजपेययाजिपद्धतौ। विधिस्तु पूर्वोक्तप्रकारेण। विप्राः षड्विंशतिर्द्वश वा। पार्वणाद्यजीवने द्वारलोपात्तत्पार्वणलोप एव। इति विधवाकर्तृकश्राद्धम्।

अथानुपनीतकर्तृकश्राद्धम्। पित्रोर्दर्शाब्दिकादिश्राद्धे पुत्रान्तराभावे कृतचूडोऽकृतचूडो वाऽनुपनीतः पुत्रोऽपि श्राद्धं कुर्यात्। तत्र विधिः प्रयोगश्च विधवाकर्तृकश्राद्धोक्तवत्। अनुज्ञाकर्तुः पितुरित्यादिविशेषोऽकृतचूडश्चेत्संकल्पमात्रं कृत्वा सर्वं ब्राह्मणद्वारा कारयेत्। अत्र मन्त्रवर्जश्राद्धप्रयोगो बहुसंमतः। इत्यनुपनीतकर्तृकश्राद्धम्।

अथ सकृन्महालयश्राद्धम्। तच्च भाद्रपदकृष्णे प्रतिपदादिनिषिद्धदिनरहिते कार्यम्। तत्र निषिद्धानि—प्रतिपत्पष्ठीसप्तम्येकादशीत्रयोदशीचतुर्दशीतिथयः। रविभौमभृगुवासराः। भरणीकृत्तिकारोहिणीमघा-

---

१ ग 'कर्वे प'। २ ग ब प्रति मू'।

रेवतीनक्षत्राणि । स्वजन्मभं तत्पूर्वोत्तरे च नक्षत्रे इति सिन्धौ । जन्मभं ततो दशममेकोनविंशं च नक्षत्रमिति चन्द्रिकायाम् । गण्डव्यतीपातवैधृतियोगा इति । अस्यापवादो हेमाद्रौ—

अमापाते मरण्यां च द्वादश्यां पक्षमध्यके ।
तिथिं वारं च नक्षत्रं योगं च न विचारयेत् ॥ इति ।

पक्षमध्यमष्टमी । पितृमृताहे निषिद्धदिनेऽपि सकृन्महालयः कार्य इत्युक्तं निर्णयसिन्धौ । कात्यायनोऽपि—

अशक्तः पक्षमध्ये तु करोत्येकदिने यदा ।
निषिद्धेऽपि दिने कुर्यात्पिण्डदानं यथाविधि ॥ इति ।

तथा—या तिथिर्यस्य मासस्य मृताहे तु प्रवर्तते ।
सा तिथिः पितृपक्षे तु पूजनीया प्रयत्नतः ॥
तिथिच्छेदो न कर्तव्यो विनाऽशौचं यदृच्छया ।
पिण्डश्राद्धं च कर्तव्यं विच्छित्तिं नैव कारयेत् ॥ इति ।

दाक्षिणात्यास्त्वेवमेवाऽऽचरन्ति । अस्मिन्पक्षे पौर्णमास्यां मृतस्य सकृन्महालयश्राद्धं त्वमावास्यायां कार्यम् । केचिद्भाद्रपदपौर्णमास्यां कार्यमिति वदन्ति तन्न युक्तिसहम् । पौर्णमास्याः कृष्णपक्षीयत्वासंभवात् । षोडशमहालयश्राद्धपक्षे पौर्णमासीमारभ्यामावास्यापर्यन्तं षोडशदिनसंपादनं हेमाद्रिणा पाक्षिकमुक्तं तदपि ग्रन्थकारैरनङ्गीकृतम् । अतः शुक्लपञ्चम्यां मृतस्य यथा भाद्रपदकृष्णपञ्चम्यां कुर्वन्ति तथेदमपि शुक्लपञ्चदश्यां मृतस्य कृष्णपञ्चदश्यामेव सकृन्महालयश्राद्धं युक्तमिति । यदा विघ्नवशेन पक्षमध्ये सकृन्महालयश्राद्धं न जातं चेत्तदाऽऽश्विनशुक्लपञ्चमीपर्यन्तं कर्तव्यमिति कौस्तुभे । आश्विनशुक्लपञ्चमीमारभ्याऽऽश्विनकृष्णपञ्चमीपर्यन्तं पूर्वोक्तप्रतिपदादिनिषिद्धरहिते कस्मिंश्चिद्दिने कार्यमिति कमलाकरः । तत्राप्यसंभव आश्विनकृष्णामायां कार्यम् । तत्राप्यसंभवे वृश्चिकसंक्रमणप्रवेशपर्यन्तमपि कार्यम् । एतच्च पितुर्मरणे प्रथमाब्दे कृताकृतमिति सिन्धौ । केचिद्दाक्षिणात्या भाद्रपदकृष्णप्रतिपदि अनुच्छिष्टसंज्ञकं कुर्वन्ति । पठन्ति च—

प्रथमाब्दे प्रोष्ठपद्यां पितुः श्राद्धं कृताकृतम् ।
अनुच्छिष्टं तु नन्दायां प्रोष्ठपद्यां तु कारयेत् ॥ इति ।

तदेतन्महाग्रन्थानुपलम्भाच्चिन्त्यम् । अत्र विश्वे देवा धूरिलोचनसंज्ञकाः । अपि कन्यागते सूर्ये काम्ये च धूरिलोचनाविति स्मरणात् ।

अत्र कन्यागत इत्युपलक्षणम्। तेनागतेऽप्यपरपक्षश्राद्धे धूरिलोचनावेव केचित्पुरूरवार्द्रवा एवेति वदन्ति। अपरे तु महालयश्राद्धस्य नित्यत्वे पुरूरवार्द्रवौ। काम्यत्वे धूरिलोचनावित्याहुः।

अथ पितरः। तेषामनेकपक्षत्वेऽपि दाक्षिणात्याचारानुसारेणैवोच्यन्ते। तत्राऽऽदौ पितृपार्वणम्। ततो मातृपार्वणम्। ततः सपत्नमातुरेकोद्दिष्टम्। तदनन्तरं मातामहपार्वणम्। ततो मातामहीपार्वणम्। ततः पत्न्या एकोद्दिष्टम्। तत उपनीतस्य पुत्रस्य। ततो विवाहिताया दुहितुः। ततः पितृव्यमातुलभ्रातॄणां सपत्नीकानांससुतानां प्रत्येकमेकोद्दिष्टानि। ततः पितृभगिनीमातृभगिन्यात्मभगिनीनां सभर्तृकाणां सापत्यानां प्रत्येकमेकोद्दिष्टानि ततः श्वशुरस्य सपत्नीकस्य ससुतस्यैकोद्दिष्टम्। ततः सपत्नीकस्य गुरोः। ततः शिष्यस्य। तत आप्तस्य। तदनन्तरं विभवे सतीच्छायां च सत्यां स्वामिकऋत्विक्पोषकाचार्यजामातृद्रव्यदानां सापत्नमातुः पित्रोश्चैकोद्दिष्टानि। गुर्वादीनां लक्षणमाह याज्ञवल्क्यः—

स गुरुर्यः क्रियां कृत्वा वेदमस्मै प्रयच्छति।
एकदेशमुपाध्याय ऋत्विग्याज्यकृदुच्यते॥ इति।

क्रियामुपनयनम्। अत्र पत्न्यादीनां बहुत्वे तावन्ति ज्येष्ठक्रमेणैकोद्दिष्टानि। तथा सपत्नमातॄणामपि। जीवन्मातृकोऽपि सापत्नमातुरेकोद्दिष्टं कुर्यान्न पार्वणम्। केचित्पितामह्याः सपत्नीसत्त्वे तस्या अप्येकोद्दिष्टमित्याहुः। एवं प्रपितामह्याः सपत्न्या अपि। अन्ये तु अस्मन्मातृतत्सपत्नीपितामहीतत्सपत्नीप्रपितामहीतत्सपत्नीनाममुकामुकदानामित्याद्युल्लेखेन मातृपार्वण एव संनिवेशः कार्य इति वदन्ति। पितृव्यादीनां जीवत्वे तत्पत्न्यादीनां नोल्लेखः। द्वारलोपात्। एवं पितामह्यादिष्वप्यूह्यम्। एते पितरो महालयश्राद्धे तीर्थश्राद्धे गयाश्राद्धे नित्यतर्पणे च ज्ञेयाः। अत्र पार्वणैकोद्दिष्टविधिना प्रयोगः। प्राधान्यं पार्वणस्यैव। अत एकोद्दिष्टे दैवराहित्येऽपि प्राधान्यानुरोधेन दैवं कर्म भवत्येव। तथैवापराह्णकालोऽपि। यदेकोद्दिष्टधर्मकर्म नाऽऽवाहनादि तद्यथासंभवं कर्तव्यमेव। एकोद्दिष्टे तूष्णीमावाहनमिति कल्पतरुः। इदं श्राद्धमन्नेनैव सपिण्डकं कर्तव्यम्। एक एव पाकः। अत्र वैश्वदेवार्थं द्वावेकं वा ब्राह्मणं निमन्त्र्य पित्रादीनां

१ क. ख. ग. घ.।

प्रत्येकमेकैकं निमन्त्रयेत् । अन्ते च महाविष्ण्वर्थमेकं ब्राह्मणं निमन्त्र्य संपूज्य भोजयेदिति कौस्तुभे । अशक्तौ प्रतिपार्वणमेकैकं प्रत्येकोद्दिष्टमेकैकं निमन्त्रयेत् । तत्राप्यसंभवे यथालाभं निमन्त्र्य यथासंभवं समावेशः कर्तव्यः । यथा । यदा त्वष्टौ विप्रा लभ्यन्ते तदा देवस्थान एकः । पितृपार्वण एकः । मातृपार्वण एकः । सापत्नमातृस्थान एकः । मातामहपार्वण एकः । मातामहीपार्वण एकः । पत्नीस्थान एकः । पुत्रादिस्थान एकः । एवमष्टौ । सप्तपक्षे देवस्थानादिषु षण्णां समावेशः पूर्ववत् । पत्न्यादीनां सर्वेषां स्थान एक इति । षट्पक्षे देवस्थान एकः । पितृपार्वण एकः । मातृपार्वणे सापत्नमातृस्थाने चैकः । मातामहादिपार्वणद्वये द्वौ । पत्न्यादिस्थाने चैक इति । पञ्चपक्षे मातामहमातामहीपार्वणयोरेकः । अन्यत्र षड्विप्रपक्षवदिति । यदा तु चत्वारो विप्रास्तदा देवस्थान एकः । पितृमातृपार्वणयोः सापत्नमातृस्थाने चैकः । मातामहमातामहीपार्वणयोरेकः । पत्न्यादिस्थानेष्वेक इति । यदा तु त्रयस्तदा देवस्थान एकः । पार्वणेषु सापत्नमातरि चैकः । पत्न्यादिष्वेकः । यदा द्वौ विप्रौ लभ्येते तदा देवस्थान एकः । पितृस्थान एकः । एकस्मिन्ब्राह्मणे सर्वानाचार्यान्तान्प्रपूजयेदिति स्मृत्यन्तरात् । यदा त्वेक एव तदा दैवे कृत्वा तु नैवेद्यमित्यादि पूर्वोक्तविधिः । सापत्नमातृबहुत्वे ज्येष्ठादिक्रमेण सर्वासामुल्लेखः । सति विभवे प्रत्येकमेकैकं विप्रं निमन्त्रयेत् । सर्वासां स्थान एकं वा । अत्र परेद्युस्तर्पणम् । सकृन्महालये श्वः स्यादिति वचनात् । एतच्च महालयश्राद्धं पितरि संन्यस्ते पतिते वा जीवति तत्पुत्रेण जीवत्पितृकेणापि पितुः पित्रादीनुद्दिश्य पिण्डरहितं सांकल्पेन विधिना कार्यमिति कमलाकरः ।

भाद्रपदकृष्णपक्षे प्रतिपदादि पञ्चम्याद्यष्टम्यादि दशम्यादि वा दर्शान्तमहरहर्महालयश्राद्धं कार्यम् । एवं करणाशक्तौ पितृमृताहे सकृन्महालयश्राद्धं कार्यम् । तत्प्रयोगः—अपराह्णे देशकालकीर्तनान्ते प्राचीना० अस्मत्पितृपितामहप्रपितामहानाममुकशर्मणाममुकगोत्राणां वसुरुद्रादित्यस्वरूपाणाम् । अस्मन्मातृपितामहीप्रपितामहीनाममुकदानाम० गो० वसु० णाम् । अस्मत्सापत्नमातुः० दायाः गोत्रायाः वसुरूपायाः । अस्मन्मातामहमातुःपितामहमातुःप्रपितामहानां शर्मणां गोत्राणां वसु० पाणाम् । अस्मन्मातामहीमातुःपितामहीमातुःप्रपितामहीनां० दानां गो०

१ ख. ग. दानां पि० ।

व० पाम् । अस्मत्पत्न्याः० दायाः० गोत्राया वसुरूपायाः । अस्मत्पुत्रस्य शर्मणो गोत्रस्य वसु० अस्मद्दुहितुः० दायाः० गोत्राया वसु० अस्मत्पितृव्यस्य शर्मणो गोत्रस्य सपत्नीकस्य ससुतस्य वसुरूपस्य। अस्मन्मातुलस्य शर्मणो गोत्रस्य सपत्नीकस्य ससुतस्य वसुरूपस्य। अस्मद्भ्रातुः शर्मणो गोत्रस्य सपत्नीकस्य ससुतस्य वसु० । अस्मत्पितृभगिन्याः० दायाः० गोत्राया वसु० सभर्तृकायाः सापत्यायाः । अस्मन्मातृभगिन्याः० दायाः० गोत्रायाः सभर्तृकायाः सापत्याया वसु० । अस्मदात्मभगिन्या० दायाः० गो० सभर्तृकायाः सापत्याया वसु० । अस्मच्छ्वशुरस्य शर्मणो गोत्रस्य सपत्नीकस्य सापत्यस्य वसु० । अस्मद्गुरोः शर्मणः गोत्रस्य सपत्नीकस्य सापत्यस्य वसु० । अस्मद्दासस्य शर्मणो गोत्रस्य सप० साप० वसुरूपस्य। सति विभव इच्छायां च सत्यामृत्विगादीनामपि षष्ठ्यन्तमुल्लेखं कृत्वैतेषां तृप्त्यर्थं सकृन्महालयापरपक्षिकं श्राद्धं सदैवं सपिण्डं पार्वणैकोद्दिष्टविधिनाऽन्नेन हविषा सद्यः करिष्य इति संकल्प्य विप्रनिमन्त्रणादिदर्शयद्देवार्चनान्तं कुर्यात् । पित्रर्चने विशेषः—तत्राऽऽसनप्रदानादि पित्र्ये क्षणः क्रियतामित्यन्तं कृत्वाऽभ्युक्षितायां भुवि दर्भेषु पितृवर्गार्थं पात्रत्रयं मातृवर्गार्थं च पात्रत्रयं दर्भत्रयात्मकपवित्रयुक्तं संस्थाप्य सापत्नमात्रर्थमेकदर्भात्मकपवित्रयुक्तमेकं पात्रं संस्थाप्य मातामहवर्गार्थं मातामहीवर्गार्थं च प्रत्येकं पात्रत्रयं दर्भत्रयात्मकपवित्रयुक्तं संस्थाप्य पत्न्याद्यर्थं प्रत्येकमेकैकमेकदर्भमयपवित्रयुक्तं संस्थापयेत् । तेषु क्रमेणाप आसिच्य शं नो देवीरिति सकृदनुमन्त्र्य तिलोऽसीतिमन्त्रावृत्त्या प्रतिपात्रं तिलानोप्य गन्धपुष्पादि क्षिप्त्वा पितृपात्रं संपन्नमित्यादि यथालिङ्गं क्रमेणाभिमृशेत् । एतादृशस्थले पितृव्यादीनां मन्त्रेषु सपत्नीकशब्दस्य न वा प्रयोगः । किं त्वभिध्यानमात्रम् । एवमुत्तरत्रापि । तिलानादाय, अस्मत्पितृपितामहप्रपितामहाञ्शर्मणो गोत्रान्वसुरूपान् । अस्मन्मातृपितामहीप्रपितामहीर्दाः, गोत्रा वसुरूपाः । अस्मन्मातामह०पान् । अस्मन्मातामही० हीः० दाः, गोत्रा व० पाः । भवतस्त्वावाहयिष्यामीति । अत्रैकोद्दिष्टानां नोल्लेखः । न चाऽऽवाहनम् । पित्रादिवर्गचतुष्टयमात्रस्याऽऽवाहनं कृत्वाऽऽयन्तु न इत्युपस्थायार्घ्यपात्राणि तत्तद्ब्राह्मणाग्रे निधाय स्वधाऽर्घ्या इति मन्त्रावृत्त्या प्रतिविप्रं निवेद्य पितरिदं तेऽर्घ्यमित्यादि तत्तद्विभक्त्यूहेनार्घ्यदानं कृत्वा पितृपात्र एव सर्वपात्रस्थानपः (पां) संस्रवान्समवनीय ताभिरद्भिः पुत्र-

१ ग. 'स्थानप'।

कामश्चेन्मुखमङ्क्त्वा प्रपितामहपात्रेणापिदध्यात् । ततो गन्धदानादि समानम् । तत्तन्नामविभक्त्यूहः पित्रादिसर्वविप्रपाणिषु होमः । पिण्डदाने पितृवर्गार्थं लेखां कृत्वा तत्पश्चान्मातृवर्गार्थं तत्पश्चान्मातामहवर्गार्थं तत्पश्चान्मातामहीवर्गार्थं च तत्पश्चात् सर्वैकोद्दिष्टार्थं दीर्घलेखामालिखेत् । अपि वाऽऽग्नेयीसंस्था दक्षिणापवर्गाः पञ्च लेखा आलिखेत् । केचित्प्रत्येकोद्दिष्टमेकैकां लेखामित्येवं पङ्क्त्याऽऽकारेण लेखा लेखनीयेत्याहुः । प्रतिलेखं बर्हिरास्तरणं प्रतिस्विकमुदकनिनयनं चाऽऽवर्तते । सर्वपितृपिण्डानां संनिवेशो यथा भवेत्तथैकं महद्बर्हिरास्तीर्य तत्तल्लेखास्थबहिःप्रदेशे तत्तत्पिण्डान्दद्यादिति स्मृत्यर्थसारादौ । उदकनिनयने शुन्धन्तां पितर इत्यादिप्रपितामह्यन्तमुक्त्वा शुन्धन्तां सापत्नमातरः । शुन्धन्तां मातामहा इत्यादिमातुःप्रपितामह्यन्ते शुन्धन्तां पत्न्यः । शुन्धन्तां पुत्राः । शुन्धन्तां दुहितरः । शुन्धन्तां पितृव्याः । शुन्धन्तां मातुलाः । शुन्धन्तां भ्रातरः । शुन्धन्तां पितृभगिन्यः । शुन्धन्तां मातृभगिन्यः । शुन्धन्तामात्मभगिन्यः । शुन्धन्तां श्वशुराः । शुन्धन्तां गुरवः । शुन्धन्तामाप्ता इति । पत्न्यादिबहुत्वे तु तत्तत्संख्यया तत्तन्मन्त्रस्याऽऽवृत्तिः । ततस्तत्तन्नामाद्युच्चारपूर्वकं पिण्डान्दत्त्वाऽऽसपिण्डस्य पुरस्ताच्चतुर्भिर्मन्त्रैर्मन्त्रलिङ्गोक्तान्पितॄनुद्दिश्य चतुरः पिण्डान्दद्यात् । ते च मन्त्राः—

आ ब्रह्मणो ये पितृवंशजाता मातुस्तथा वंशभवा मदीयाः ।
वंशद्वयेऽस्मिन्मम दासभूता भृत्यास्तथैवाऽऽश्रितसेवकाश्च ॥
मित्राणि सख्यः पशवश्च वृक्षा दृष्टाश्च स्पृष्टाश्च कृतोपकाराः ।
जन्मान्तरे ये मम संगताश्च तेभ्यः स्वधा पिण्डमहं ददामि ॥ १ ॥

पितृवंशे मृता ये च मातृवंशे तथैव च ।
गुरुश्वशुरबन्धूनां ये चान्ये बान्धवाः स्मृताः ॥
ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः ।
क्रियालोपगताश्चैव जात्यन्धाः पङ्गवस्तथा ॥
विरूपा आमगर्भाश्च ज्ञाताज्ञाताः कुले मम ।
धर्मपिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठतु ॥ २ ॥
उच्छिन्नकुलवंशानां येषां दाता कुले न हि ।
धर्मपिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठतु ॥ ३ ॥

---

१ ग. °थं त° । २ क. ग. °न्तां वि° ।

असिपत्रवने घोरे कुम्भीपाके च ये गताः ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ ४ ॥

ततः, अत्र पितरो मादयध्वमित्यादि दर्शश्राद्धवत् । पत्न्या वर्गचतुष्टयमध्यपिण्डप्राशनमिति विशेषः । परेद्युः सर्वान्पितॄंस्तिलोदकेन तर्पयेत् । सकृन्महालये श्वः स्यादिति वचनात् । इति सकृन्महालयश्राद्धप्रयोगः ।

अथ नित्यश्राद्धम् । तदाह हेमाद्रौ व्यासः—

अहन्यहनि यच्छ्राद्धं तन्नित्यमिति कीर्तितम् ।

मार्कण्डेयपुराणे—कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ।
पितॄनुद्दिश्य विप्रांश्च भोजयेद्विप्रमेव वा ॥

इदं षड्दैवत्यं दैवहीनं च ।

नित्यश्राद्धं दैवहीनं नियमादिविवर्जितम् ।
दक्षिणारहितं चैव दातृभोक्तृव्रतोज्झितम् ॥

इति काशीखण्डात् ।

उपवेश्याऽऽसनं दत्त्वा संपूज्य कुसुमादिभिः ॥
निर्दिश्य भोजयित्वा तु किंचिद्दत्त्वा विसर्जयेत् ॥

इति प्रचेतस उक्तेर्दक्षिणायां विकल्पः । शक्ताशक्तत्वेन वा व्यवस्था बोध्या । अस्मिञ्श्राद्धे देशकालान्ननियमा न सन्ति । उत्तमान्नसद्भावे तु जघन्यं न दद्यादिति चन्द्रिकायाम् । न कर्तृभोक्तृनियमाः । इदं दिवाऽसंभवे रात्रावपि प्रहरपर्यन्तं कार्यमिति तत्रैव । दिवाऽसंभवे लोप एवेति पृथ्वीचन्द्रः । इदं षड्दैवते श्राद्धान्तरे प्राप्ते सति प्रसङ्गसिद्धेर्नित्यश्राद्धं पृथङ्न कार्यम् । भिन्नदेवताके वार्षिकादौ तु तच्छ्राद्धान्नशेषेणैव कार्यम् । अत्रेतिकर्तव्यतामाह प्रचेताः—

नाऽऽमन्त्रणं न होमं च नाऽऽह्वानं न विसर्जनम् ।
न पिण्डदानं विकिरं न दद्यादत्र दक्षिणाम् ॥

अत्र शक्तश्चेत्प्रतिदैवतमेकैकं विप्रमेवं षड्विप्रान्भोजयेत् । प्रतिपार्वणमेकैकमेव द्वौ वा । अशक्तश्चेदेकं वा । एकमप्याशयेद्विप्रं षण्णामप्यन्वहं गृहीति व्यासोक्तेः । विप्रालाभे त्वाह कात्यायनः—

उत्कृष्टं नास्ति चेदन्नं भोक्ता भोज्यमथापि वा ।
अभ्युद्धृत्य यथाशक्ति किंचिदन्नं यथाविधि ॥
पितृभ्य इदमित्युक्त्वा स्वधाकारमुदाहरेत् । इति ।

---

१ ग. तोत्तमम् । २ ग. °हैं व्र° ।

तत्प्रतिपत्तिमाह विष्णुः–तदन्नं भिक्षवे दद्यात्तदलाभे गोभ्यो दद्या-दप्सौ वा क्षिपेदिति ।

अथ नित्यश्राद्धप्रयोगः । आचम्य पवित्रपाणिः प्राणानायम्य देश-कालौ स्मृत्वा प्राचीनावीती, अस्मत्पितृपितामहप्रपितामहानाममुकश-र्मणाममुकगोत्राणां वसुरुद्रादित्यस्वरूपाणां सपत्नीकानाम् । अस्म-न्मातामहमातुःपितामहमातुःप्रपितामहानां शर्मणां गोत्राणां० पाणां सपत्नीकानामेतेषां तृप्त्यर्थं नित्यश्राद्धं करिष्य इति संकल्प्योदङ्मुखं विप्रमुपवेश्य, अस्मत्पितृ०णां सपत्नीकानाम् । अस्मन्मातामह०णां सप-त्नीकानामिदमासनम् । अस्मत्पितृपितामहप्रपितामहाः शर्माणः० गोत्रा व०रूपाः सपत्नीकाः। अस्मन्मातामह०हाः। शर्माणः०गोत्राः०रूपाः सप-त्नीका एष वो गन्धः स्वधा नमो न मम । एवं पुष्पाणि धूपदीपावा-च्छादनं च समर्प्यार्चनविधेः संपूर्णतां वाचयित्वा वर्तुलमण्डले भोज-नपात्रमासाद्यान्नं परिविष्य गायत्र्याऽभ्युक्ष्य, अस्मत्पितृपितामहप्रपि-तामहेभ्यः शर्मभ्यो वसु०भ्यः सपत्नीकेभ्यः, अस्मन्मातामह०भ्यः, अ० श० अ० गो० वसु० सपत्नीकेभ्य इदमन्नममृतरूपं परिविष्टं परिवेक्ष्य-माणं चाऽऽ तृप्तेः स्वधा कव्यं नमो न मम । ब्रह्मार्पणं० । प्राचीना० एको विष्णु० अनेन नित्यश्राद्धेन भगवान्पितृस्वरूपी जनार्दनवासुदेवः प्रीयतामित्युक्त्वा ब्राह्मणान्भोजयित्वा नमस्कारेण तान्विसर्जयेत् । सति विभवे दक्षिणां दद्यात् । नात्र तर्पणम् । इति नित्यश्राद्धप्रयोगः ।

इति श्रीमच्चित्तपावनकेळकरोपाभिधमहादेवात्मजबापूभट्टेन विरचि-तायां श्राद्धमञ्जर्यामनुकल्पादिनित्यश्राद्धान्तप्रयोगाः ।

---

अथ षण्णवतिश्राद्धानि । तान्युक्तानि निर्णयसिन्धौ–

अमायुगमनुक्रान्तिधृतिपातमहालयाः ।
अन्वष्टक्यं च पूर्वेद्युः षण्णवत्यः(तिः) प्रकीर्तिताः (ता) ॥

चकारादष्टकाग्रहणम् । अमा द्वादश १२ युगादयश्चतस्रः ४ मन्वा-दयश्चतुर्दश १४ संक्रान्तयो द्वादश १२ वैधृतयस्त्रयोदश १३ व्यती-पातास्त्रयोदश १३ महालयाः षोडश १६ पूर्वेद्युः श्राद्धानि चत्वारि ४ अष्टकाश्राद्धानि ४ अन्वष्टकाश्राद्धानि ४ एवं संवत्सरेण षण्णवतिः ९६ श्राद्धानि भवन्ति नित्यानीति कमलाकरः । एष श्राद्धेषु सर्वत्रानुका-

पपराह्णः कालः। पुरूरवार्द्रवसंज्ञका विश्वे देवाः। देवतास्तु पित्राद्यस्त्रयः सपत्नीका मातामहाद्यस्त्रयः सपत्नीकाः। एवं षट्। श्राद्धात्पूर्वं दर्शवत्तर्पणम्। प्रयोगस्तु पिण्डसहितः पार्वणवत्। विशेषस्तु तत्तत्प्रकरणे वक्ष्यते। एतेषु दर्शश्राद्धं तूक्तमेव। विवाहाद्यनन्तरं दर्शश्राद्धं पिण्डरहितमेव।

अथ युगादिश्राद्धम्। युगाद्यश्चोक्ता रत्नमालायाम्–

माघे पञ्चदशी कृष्णा नभस्ये च त्रयोदशी।
तृतीया माधवे शुक्ला नवम्यूर्जे युगादयः॥

माघमास्यमावास्या। भाद्रकृष्णत्रयोदशी। वैशाखशुक्लतृतीया। कार्तिकशुक्लनवमी। एताश्चतस्रस्तिथयो युगादय इत्यर्थः। नारदः—शुक्ले पौर्वाह्णिकी ग्राह्ये(ह्या) कृष्णे चैवाऽऽपराह्णिकी। अत्र शुक्लपक्षयुगादिश्राद्धं पूर्वाह्णे कार्यमिति शूलपाणिः। निर्णयामृतादयस्तु श्राद्धं आपराह्णिक्येव ग्राह्येत्याहुः। वचनात्पूर्वाह्णव्यापिन्यामेवापराह्णे श्राद्धं कार्यमिति कमलाकरसिद्धान्तः। अत्र पिण्डनिषेधात्सांकल्पिकविधिः। इति युगादिश्राद्धम्।

अथ मन्वादिश्राद्धम्। मन्वाद्य उक्ता दीपिकायाम्–

तिथ्यग्नी न तिथिस्तिथ्याशे कृष्णेभोऽनलो ग्रहः।
तिथ्यर्कौ न शिवोऽश्वोऽमातिथी मन्वादयो मधोः॥

अस्यार्थः। तिथिः पूर्णिमा। अग्निस्तृतीया। चैत्रे मास एते तृतीया पौर्णमासी(च) शुक्लपक्षस्थे मन्वादी ज्ञेये। वैशाखे मन्वादिर्नास्ति। ज्येष्ठे पौ(पू)र्णिमा। आशा दश, आषाढे शुक्लदशमी पौर्णमासी चेति द्वे। कृष्णेभः श्रावणे कृष्णाष्टमी। भाद्रे शुक्लतृतीया। आश्विने शुक्लनवमी। कार्तिके शुक्लद्वादशी पौर्णमासी चेति द्वे। मार्गशीर्षे नास्ति। पौषे शुक्लैकादशी। माघे शुक्लसप्तमी। फाल्गुने पौर्णमास्यमावास्या चेति द्वे। एवमेताश्चतुर्दश मन्वादयः। एताः शुक्लपक्षस्थाः पौर्वाह्णिक्यः कृष्णपक्षस्था आपराह्णिक्य इत्यादिकालनिर्णयस्तु युगादिवत्। सांकल्पिकविधिश्च। इति मन्वादिश्राद्धम्॥

अथ संक्रान्तिश्राद्धम्। अत्र तत्तत्संक्रान्तिपर्वकाले श्राद्धम्। सामान्यतः सर्वेषां संक्रमणानां संक्रमात्पूर्वं षोडश संक्रमोत्तरं षोडशेत्येवं

---

१६ स ए०। २ क ख. 'पशे ग'।

द्वात्रिंशद्घटिकाः पुण्यकालः सर्वग्रन्थकारैरुक्तः । विशेपस्त्वाह कमलाकरः—

प्रागूर्ध्वा दश पूर्वतः पडवनिस्तद्वत्पराः पूर्वत-
स्त्रिंशत्षोडश पूर्वतोऽप्यपरतः पूर्वाः पराः स्युर्दश ।
पूर्वाः षोडश चोत्तरा ऋतुभुवः पश्चात्खवेदाः पुनः
पूर्वाः षोडश चोत्तराः पुनरथो पुण्यास्तु मेषादितः ॥

अस्यार्थः । मेपे प्रागूर्ध्वं च दश घटिकाः पुण्यकालः । वृपे पूर्वाः षोडश । मिथुने पराः षोडश । कर्के पूर्वास्त्रिंशत् । सिंहे पूर्वाः षोडश । कन्यायां पराः षोडश । तुलायां प्रागूर्ध्वा दश । वृश्चिके पूर्वाः षोडश । धनुषि पराः षोडश । मकरे चत्वारिंशत्पराः । इदं च हेमाद्रिमतेनोक्तम् । माधवमते त्वत्र परा विंशतिः । कुम्भे पूर्वाः षोडश । मीने पराः षोडशेति ।

याम्युत्तरा पुण्यतमा मयोक्ता
सायं भवेत्सा यदि साऽपि पूर्वा ।
पूर्वा तु योक्ता यदि सा विभाते
साऽप्युत्तरा रात्रिनिषेधतः स्यात् ॥
अर्वाङ्निशीथाद्यदि संक्रमः स्या-
त्पूर्वेऽह्नि पुण्यं परतः परेऽह्नि ।
आसन्नयामद्वयमेव पुण्यं
निशीथमध्ये तु दिनद्वयं स्यात् ॥
कर्के झपेऽप्येवमिति ह्युवाच
हेमाद्रिसूरिश्च तथाऽपरार्कः ।
झपः प्रदोषे यदि वाऽर्धरात्रे
परेऽह्नि पुण्यं त्वथ कर्कटश्चेत् ॥
प्रभातकाले यदि वा निशीथे
पूर्वेऽह्नि पुण्यं त्विति माधवार्यः । इति ।

एवमुक्ते पुण्यकालेऽपराह्णयोगे श्राद्धं कार्यम् । अपराह्णयोगाभावे तत्तत्पर्वकालानुरोधेन दिवैव कार्यम् । गौणकालोऽप्यपराह्णे चेत्स एव ग्राह्यः । अत्र कन्यासंक्रान्तिश्राद्धे धूरिलोचनसंज्ञका विश्वे देवाः । अन्येषु पुरूरवार्द्रवाः । सांकल्पिकविधिरिति विशेषः । इति संक्रातिश्राद्धम् ।

१ ग. °र्के समद्येय° । २ ग. इदं ।

अथ वैधृतिव्यतीपातश्राद्धम् । वैधृतिव्यतीपातौ कुतपव्यापिनौ दिनद्वये सत्त्वेऽसत्त्वे च परदिनव्यापिनौ ग्राह्यौ । अत्र पिण्डा न सन्ति । विधिस्तु सांकल्पिकः । अत्र ब्रह्मचर्यादिनियमा न सन्तीत्युक्तं प्राक् । इति वैधृतिव्यतीपातश्राद्धम् ।

अथ महालयश्राद्धानि । तानि च भाद्रपदकृष्णप्रतिपदमारभ्याऽऽश्विनशुक्लप्रतिपत्पर्यन्तं प्रत्यहमेकैकमेवं षोडश भवन्ति । तिथिवृद्ध्या पक्षस्य षोडशदिनत्वेऽमावास्यापर्यन्तमेव । भाद्रपदपौर्णमासीमारभ्यामावास्यापर्यन्तं वा षोडशेति हेमाद्रिमतं तत्सर्वग्रन्थकारासंमतत्वादुपेक्ष्यम् । अत्र पितृपार्वणं मातृपार्वणं सपत्नीकमातामहपार्वणमिति नवदैवत्यम् । अथ वा मातामह्यादीनां पृथक्पार्वणमेवं द्वादशदैवत्यम् । अपि वा सकृन्महालयवत्पार्वणैकोद्दिष्टदेवतासमुच्चयात्मकम् । अत्राऽऽचाराच्छक्त्या वा व्यवस्था बोध्या । इमानि श्राद्धानि अन्नेनैव कर्तव्यानि नाऽऽमान्नादिना । नात्र नन्दादिदिने पिण्डनिषेधः । तदुक्तं पराशरमाधवीये कार्ष्णाजिनिना—

नभस्यस्यापरे पक्षे श्राद्धं कार्यं दिने दिने ।
नैव नन्दादि वर्ज्यं स्यान्नैव निन्द्या चतुर्दशी ॥ इति ।

गुर्विणीपतिना तु सांकल्पिकं कार्यम् । मुण्डनं पिण्डदानं चेति दक्षोक्तेः । केचिद्गर्भिणीपतिनाऽपि सपिण्डकमेव कार्यमित्याहुः । गर्भिणीपतेः पिण्डनिषेधस्तु सप्तममासादूर्ध्वं भवति । तदुक्तं कौस्तुभे—

वपनं मैथुनं तीर्थं वर्जयेद्गर्भिणीपतिः ।
श्राद्धं च सप्तमान्मासादूर्ध्वमित्याश्वलायनः ॥

श्राद्धं सपिण्डम् । आब्दिकाद्यावश्यकं तु कर्तव्यमेव । विवाहाद्यनन्तरमपि महालयश्राद्धानि सपिण्डानि । देवास्त्वत्र पुरूरवार्द्रवसंज्ञका इति बहवः । धूरिलोचनाविति केचित् । तर्पणं तु प्रतिदिनं प्रयोगान्ते । पक्षश्राद्धे हिरण्ये च अनुव्रज्य तिलोदकमिति वचनात् । इति महालयश्राद्धानि ।

अष्टकाश्राद्धानां पक्षान्तरसत्त्वेऽपि आश्वलायनैर्मार्गशीर्षादिचतुर्षु मासेषु कृष्णपक्षे सप्तम्यां पूर्वेद्युः श्राद्धमष्टम्यामष्टमीश्राद्धं नवम्यामन्वष्टक्यश्राद्धमेवं द्वादश श्राद्धानि कार्याणि । हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका इत्याद्याश्वलायनोक्तेः । एतत्प्रयोगविषये भीम-

नारायणभट्टकृतं प्रयोगरत्नमेव जागर्ति । विवाहाद्यनन्तरमष्टमीश्राद्धं पिण्डरहितमेव । पूर्वेद्युः श्राद्धमन्वष्टकाश्राद्धं च सपिण्डमेवेति चातुर्धरीयषण्णवतिश्राद्धनिर्णये। तत्राष्टमीश्राद्धे व्यतिषङ्गाभावात्पिण्डनिर्वपणं केचिन्नेच्छन्त्यस्मिंश्चतुष्टय इति कारिकोक्तेश्च पिण्डरहितं कर्तुं शक्यते । पूर्वेद्युरन्वष्टक्ययोर्व्यतिषङ्गात्सपिण्डत्वमिति तदाशयः । मलमासेऽप्यमायुगमनुवैधृतिव्यतीपातश्राद्धानि कार्याणि। महालयाष्टकादीनि न कार्याणीत्यन्यत्र विस्तर इति दिक् ।

इति श्रीमच्चित्तपावनके० श्राद्धमञ्जर्यां षण्णवतिश्राद्धानि ।

अथ विविधानि विकृतिश्राद्धानि। तत्र भाद्रपदपौर्णमास्यां प्रोष्ठपदीश्राद्धमुक्तं हेमाद्रौ ब्रह्माण्डपुराणे—

नान्दीमुखानां प्रत्यब्दं कन्याराशिगते रवौ ।
पौर्णमास्यां तु कर्तव्यं वराहवचनं यथा ॥
पिता पितामहश्चैव तथैव प्रपितामहः ।
त्रयो ह्यश्रुमुखा ह्येते पितरः संप्रकीर्तिताः ॥
तेभ्यः पूर्वे त्रयो ये तु ते तु नान्दीमुखाः स्मृताः ॥ इति ।

अत्रापि कन्यागत इत्युपलक्षणम् । अतो धूरिलोचनौ देवौ । पितरस्तु प्रपितामहस्य पितृपितामहप्रपितामहाः । अत्र मातामहा अपि कार्या इति कमलाकरः । वृद्धप्रपितामहादित्रय एव नात्र मातामहा इति चन्द्रिकाकारेण सिद्धान्तितम् । तत्रत्यवचनम्—तस्मात्प्रोष्ठपदीश्राद्धे नेज्या मातामहादय इति । मयूखकारस्याप्ययमेव सिद्धान्तः । एतच्छ्राद्धं प्रतिसंवत्सरमावश्यकतया कार्यमिति सिन्धौ । पौर्णमास्यां पिण्डनिषेधेऽप्यस्मिञ्श्राद्धे पिण्डदानं भवत्येवेति तत्रैव । एतच्चापुत्रविधवयाऽपि कार्यमिति चन्द्रिकाकारः। श्राद्धाङ्गतर्पणं तु परेद्युः कार्यमिति स एव । गोपीनाथदीक्षितप्रयोगे तु दर्शवदादावेवोक्तम् । अत्रास्मन्नान्दीमुखानाममुकशर्मणामित्यादिप्रयोगक्रमो ज्ञेय इति चन्द्रिकाकारः । नात्रे नान्दीमुखत्वं पितृविशेषणमिति कमलाकरसिद्धान्तः । कौस्तुभकारस्याप्येवमेव ।

अथ प्रयोगः । भाद्रपदपौर्णमास्यामपराह्णे देशकालौ संकीर्त्यास्मत्पितामहपितृपितामहप्रपितामहानाममुकशर्मणाममुकगोत्राणां वसुरुद्रा-

१ ग. 'ऋतत्र°। २ ग. तत्र ।

दित्यस्वरूपाणामेतेषां तृप्त्यर्थं प्रोष्ठपदीश्राद्धं सदैवं सपिण्डं पार्वणेन विधिनाऽन्नेन हविषा सद्यः करिष्य इति संकल्प्य तत्तद्विभक्त्युल्लेखपूर्वकं प्रयोगः। अस्मत्प्रपितामहस्य पितरं शर्माणं गोत्रं वसुरूपमावाहयामि। अस्मत्प्रपितामहस्य पितामहं०। अस्मत्प्रपितामहस्य प्रपितामहं० इत्यादि। शुन्धन्तां प्रपितामहपितरः। शुन्धन्तां प्रपिताहपितामहाः। शुन्धन्तां प्रपितमहप्रपितामहाः। एतत्तेऽस्मत्प्रपितामहपितरमुकशर्मन्नमुकगोत्र वसुरूप ये च त्वामत्रानु तेभ्यश्च। एतत्तेऽस्मत्प्रपितामहपितामह० भ्यश्च। एतत्तेऽस्मत्प्रपितामहप्रपितामह० भ्यश्चेत्यादि यथायथमूहः। शेषं दर्शश्राद्धवत्। इति प्रोष्ठपदीश्राद्धप्रयोगः।

अथ भरणीश्राद्धम्। भाद्रपदकृष्णपक्षे यस्मिन्दिने भरणीनक्षत्रं भवति तस्मिन्दिने प्रतिसंवत्सरं दर्शवत्षड्दैवत्यं पिण्डरहितं सांकल्पविधिना श्राद्धं कुर्यात्। देवौ पुरूरवार्द्रवौ। काम्यत्वे धूरिलोचनौ। इति भरणीश्राद्धम्।

तृतीयायां कृत्तिकानक्षत्रं चेत्तत्रापि श्राद्धमेव कार्यम्। तदुक्तं पृथ्वीचन्द्रोदये—

नभस्यापरपक्षस्य द्वितीया यदि याम्यभे।
तृतीया चाग्नितारा भिः सहिता प्रीतिदा पितुः॥ इति।

एतत्पक्षे षष्ठी योगविशेषेण कपिलासंज्ञा। तदुक्तं वाराहे—
नभस्यकृष्णपक्षे तु रोहिणीपातभूसुतैः।
युक्ता षष्ठी पुराणज्ञैः कपिला परिकीर्तिता॥

हस्तगतेऽर्के सति फलातिशयः। तदुक्तं पुराणसमुच्चये—
भाद्रे मास्यसिते पक्षे भानौ चैव करे स्थिते।
पाते कुजे च रोहिण्यां सा षष्ठी कपिला स्मृता॥ इति।

अत्रापि ग्रहणादिवत्पर्वनिमित्तं श्राद्धं कार्यम्। अष्टम्यां माध्यावर्ष(?)—संज्ञकं श्राद्धमुक्तमाश्वलायनेन—एतेन माध्यावर्षं(?) प्रोष्ठपद्या अपरपक्ष इति। इदं सप्तम्यादित्र्यहःसु कार्यमिति वृत्तिकृत्। प्रयोगस्त्वष्टकाश्राद्धवत्। अशक्तावेकस्यां वाऽष्टम्यामेव।

आषाढ्याः पञ्चमे पक्षे गया मध्याष्टमी स्मृता।
त्रयोदशी गजच्छाया गयातुल्या तु पैतृके॥

---

१ ग कामे।

इति ब्राह्मात् । अत्र कामकालौ देवौ । अष्टम्यां कामकालाविति वचनात् । भाद्रपदकृष्णनवम्यामन्वष्टकाश्राद्धं नवदैवत्यात्मकं कात्यायनादिभिरुक्तम् । तच्चाऽऽश्वलायनानां माघ्यावर्ष(?)श्राद्धत्रयकरणपक्षे नवम्यामन्वष्टक्यं भवत्येव । एकस्यामेवाष्टम्यां करणपक्ष इदमपि पृथक्त्वेन कार्यम् । अस्यां मातृश्राद्धमत्यावश्यकम् । तदुक्तं चन्द्रिकायां स्मृतौ—

सर्वासामेव मातॄणां श्राद्धं कन्यागते रवौ ।
नवम्यां हि प्रदातव्यं ब्रह्मलब्धवरा यतः ॥ इति ।

अत्र सर्वासामित्युक्तत्वात्सापत्नमातॄणामपि कार्यम् । स्वमातरि जीवन्त्यामपि सापत्नमातृभ्यो दद्यादिति कमलाकरः । इदमनुपनीतेन गर्भिणीपतिनाऽपि सपिण्डकं कार्यमिति स एव । तथा जीवत्पितृकेणापि कार्यम् ।

अन्वष्टक्यां गयाप्राप्तौ सत्यां यच्च मृतेऽहनि ।
मातुः श्राद्धं सुतः कुर्यात्पितर्यपि च जीवति ॥

इति मैत्रायणीयपरिशिष्टात् । इदं श्राद्धं भर्तृमरणोत्तरं पूर्वमृतमातुर्न कार्यमिति केचिदाहुस्तन्निर्मूलमिति कमलाकरः । विधवाया अपीति चन्द्रिकाकारः । सिन्धौ ब्राह्मे—

पितृमातृकुलोत्पन्ना याः काश्चित्तु मृताः स्त्रियः ।
श्राद्धार्हास्तास्तु विज्ञेयाः श्राद्धं तासां प्रदीयते ॥ इति ।

अत्राऽऽचाराद्व्यवस्था । अत्र सुवासिनीभोजनमावश्यकम् ।

मातुः श्राद्धे तु संप्राप्ते ब्राह्मणैः सह भोजनम् ॥
सुवासिन्यै प्रदातव्यमिति शातातपोऽब्रवीत् ।

इति मार्कण्डेयपुराणात् । विप्रालाभे सुवासिनीमपि भोजयेदिति प्रागेवोक्तम् । अत्र मातृबहुत्वेऽप्येको ब्राह्मणः पिण्डश्च । तद्विधिस्तु वृत्त्यनुसारेण प्रयोगे वक्ष्यते । अस्य श्राद्धस्यातितरावमाश्यकत्वात्संकटे पूर्वोक्तानुकल्पानामन्यतमेन कार्यम् ।

अथ प्रयोगः । उक्तापराह्णे जीवत्पिताऽऽप्रक्षोद्यात्प्राचीनावीतं कृत्वा, अस्मन्मातृपितामहीप्रपितामहीनाममुकदानाममुकगोत्राणां वसु०पाणामेतासां तृप्त्यर्थं कन्यागते सवितरि भाद्रपदापरपक्षनवम्यन्वष्टक्य-

१ क. ख. ॰कालकावि॰ । २ ग ॰वंश का॰ ।

वसुरूपाभ्यामिदमन्नममृतरूपं० । द्वित्वे बहुत्वे तु मातरः० दाः० गोत्रा वसुरूपा देवता इदमन्नं हवि० । अस्मन्मातृभ्यो० दाभ्यो गोत्राभ्यो वसुरूपाभ्य इदमन्नममृतरूपं० । एवं सुवासिन्या अन्ननिवेदने च । उदकानिनयने शुन्धन्तां मातरः । शुन्धन्तां पितामह्यः । शुन्धन्तां प्रपितामह्य इत्येवं, पिण्डप्रदान एतद्वामस्मन्मातरौ गङ्गायमुनादे गोत्रे वसुरूपे ये च युवामन्वानु तेभ्यश्चेत्यूहः । सापत्नमातृद्वित्वे बहुत्वे वा—एतद्वोऽस्मन्मातरः० दाः० गोत्रा० वसुरूपा ये च युष्मानन्वानु इत्यूहः । अत्र पितर इत्यत्र नोहः । अमीमदन्तेत्यत्र च नोहः । अभ्यञ्जनदाने—अस्मन्मातरौ०दे०गोत्रे वसुरूपे अभ्यञ्जाथाम् । अञ्जनदाने—अस्मन्मातरौ० वसुरूपे अञ्जाथामित्यूहो द्वित्वे बहुत्वे तु अस्मन्मातरः० दाः० गोत्रा वसुरूपा अभ्यङ्ग्ध्वम् । इत्यभ्यञ्जने । अङ्ग्ध्वमित्यञ्जने । एतद्वः पितरो वास इत्यादिषु नोह इति विशेषः । अन्यत्सर्वं पूर्ववत् । मृतपितृककर्तृकेऽप्येवमेव प्रयोगः । कौस्तुभे तु मृतपितृकेण पितुर्महालय एव मातृतृप्तेः संपादितत्वान्नैतत्कार्यमित्युक्तम् । इति नवमीश्राद्धप्रयोगः ।

अथ भाद्रकृष्णद्वादश्यां संन्यस्तपितुः श्राद्धप्रयोगः । उक्तापराह्णे देशकालौ संकीर्त्यास्मद्ब्रह्मीभूतपितृपितामहप्रपितामहानाममुकशर्मणां० गोत्राणां वसु० णामित्यादिपार्वणैकोद्दिष्टोल्कीर्तनेन संकल्पप्रभृति सकृन्महालयवत्सर्वं कुर्यात् । मन्त्रव्यतिरिक्तस्थले सर्वत्र ब्रह्मीभूतपदोच्चारणमधिकम् । मन्त्रेषु त्वभिधानमात्रम् । तिथ्यन्तरे मृतस्यापि संन्यासिनो द्वादश्यामेव सकृन्महालयश्राद्धं कार्यम् । पक्षश्राद्धादिकरणे तु सर्वास्वपि तिथिषु श्राद्धानि भवन्ति । इति संन्यस्तपितुः श्राद्धप्रयोगः ।

अथ भाद्रकृष्णपक्षे मघात्रयोदशीश्राद्धम् । तच्च केवलत्रयोदश्यां केवलमघानक्षत्रे वा कार्यम् । द्वयोर्योगे फलाधिक्यम् । त्रयोदशीश्राद्धं नित्यम् । मघाश्राद्धं तु काम्यम् । नित्यत्वात्त्रयोदश्यां पुरूरवार्द्रवौ देवौ । मघासु काम्यत्वाद्धूरिलोचनौ । उभयोर्योगे धूरिलोचनौ । उभयत्रापि पिण्डदाननिषेधात्सांकल्पिकविधिः । मघाश्राद्धमविभक्तैरपि पृथक्पृथक्कार्यम् । तदुक्तं हेमाद्रौ—

१ ग. 'ण्ड्दा' । २ क. ख. 'त्रेऽपि वा' । ३ ग. 'करुपवि' ।

विभक्ता वाऽविभक्ता वा कुर्युः श्राद्धं पृथक्सुताः।
मघासु तु ततोऽन्यत्र नाधिकारः पृथक्पृथक् ॥ इति।

अत्र तुशब्दस्य ततोऽन्यत्रेत्यनन्तरमन्वयः। अविभक्तानां मघाश्राद्धव्यतिरिक्तश्राद्धेषु पृथगधिकारो नास्तीत्यर्थः। त्रयोदशीश्राद्धं पुत्रवता नैव कार्यम्। अपुत्रवताऽपि पिण्डरहितं कार्यमिति कौस्तुभे। मघात्रयोदशीश्राद्धे मधुपायसमतिप्रशस्तम्। कलौ मधुनिषेधात्तत्स्थाने गुडो घृतं वा देयम्। एतन्मूलवाक्यानि निर्णयसिन्धौ द्रष्टव्यानि। मघात्रयोदशीयोगे श्राद्धमधिमासेऽपि कर्तव्यमिति चन्द्रिकायाम्। अत्र मघात्रयोदशीयुगादिश्राद्धानां तन्त्रता। महालयश्राद्धकरणपक्षे तु तेनैवैषां प्रसङ्गसिद्धिः। महालयश्राद्धस्यापि तन्त्रत्वोक्तिस्तु कस्यचिन्मूर्खप्रलापत्वादुपेक्ष्येति मयूखकारः।

अथ प्रयोगः। पितृवर्गस्य सपत्नीकस्य मातामहवर्गस्य सपत्नीकस्योत्कीर्तनं कृत्वैतेषां तृप्त्यर्थं त्रयोदशीश्राद्धं सदैवं सांकल्पविधिनाऽन्नेन हविषा सद्यः करिष्ये मघाश्राद्धमिति मघाश्राद्धे मघात्रयोदशीश्राद्धमिति योगे संकल्पं कृत्वा पूर्वोक्तसांकल्पविधानेन सर्वं कुर्यात्। ततः श्राद्धान्ते वर्गद्वयस्य तर्पणम्। इति मघात्रयोदशीश्राद्धप्रयोगः।

अथ गजच्छाया। सा चोक्ता ग्रन्थान्तरे—

प्रेतपक्षे त्रयोदश्यां मघास्विन्दुः करे रवौ।
यदा तदा गजच्छाया सूर्यपर्वशताधिका ॥ इति।

यदा भाद्रपदकृष्णत्रयोदश्यां हस्तनक्षत्रे सूर्यो मघानक्षत्रे चन्द्रो भवति तदा गजच्छायासंज्ञको योगविशेष इत्यर्थः। अत्रापि पूर्ववत्पिण्डरहितं षड्दैवत्यं श्राद्धं कुर्यात्। नैमित्तिकत्वात्कामकालौ दैवाविति विशेषः। भाद्रकृष्णामायामपि हस्तनक्षत्रे चन्द्रसूर्यौ स्यातां तदाऽपि गजच्छाया। तदुक्तं सिन्धौ यमेन—

हंसे करे स्थिते या तु अमावास्या कराऽन्विता।
सा ज्ञेया कुञ्जरच्छाया इति बौधायनोऽब्रवीत् ॥

अस्यामपि पिण्डरहितं षड्दैवत्यं श्राद्धं कुर्यात्। इदं च श्राद्धं गजच्छायायां कर्तव्यम्। गजच्छायासु कुर्वीत कर्णव्यजनवीजिते, इति भारतोक्तेः। सिन्धौ च—

पायसं मधुसर्पिर्भ्यां प्राक्छाये कुञ्जरस्य च ।

श्राद्धं दद्यादिति शेषः । इति गजच्छायाश्राद्धम् ॥

अथ भाद्रकृष्णचतुर्दश्यां शस्त्रहतश्राद्धम् । तच्च पित्रादेः शस्त्रहतस्यैकोद्दिष्टविधिना कार्यम् । एकोद्दिष्टे दैवनिषेधेऽपि वचनादेतच्छ्राद्धं सदैवं कार्यम् । पित्रादिद्वयोः शस्त्रमृतावेकोद्दिष्टद्वयं कार्यम् । त्रयाणामपि तथात्व एकोद्दिष्टत्रयं कार्यम् । पित्रादित्रयाणां शस्त्रमृतौ पार्वणमेव कार्यमित्यन्ये । एतच्छ्राद्धमन्यैरपि विषजलाग्निशृङ्गिदंष्ट्रिसर्पश्वापदपशुव्याघ्रादिदुर्मरणैर्मृतानामात्मत्यागिनामुपसर्गमृतानामुद्बन्धनादिमृतानां चैकोद्दिष्टं कार्यम् । यूपमृतानामपि कार्यम् । असाध्यव्याध्यभिभूतानां विधिपूर्वकभृग्वग्न्यम्बुमृतानां नैवात्र श्राद्धम् । एतत्स्त्रीणामपि शस्त्रादिहतानां दुर्मरणमृतानां चैकोद्दिष्टं कार्यम् । सहगमने तु वैधत्वान्न भवति । अत्र पुरूरवार्द्रवौ देवौ । कामकालाविति मयूखे । एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यत इति वचनात् ।

अथ प्रयोगः । मध्याह्ने देशकालौ स्मृत्वाऽस्मत्पितुः० शर्मणो गोत्रस्य वसुरूपस्य शस्त्रहतस्य तृप्त्यर्थं भाद्रपदापरपक्षचतुर्दशीश्राद्धं सदैवं सपिण्डमेकोद्दिष्टविधिनाऽन्नेन हविषा सद्यः करिष्य इति संकल्प्य पुरूरवार्द्रवसंज्ञकविश्वदेवार्थमेकं विप्रं निमन्त्र्य पित्रर्थमेकं निमन्त्र्य पूर्वोक्तैकोद्दिष्टप्रयोगवत्सर्वं कृत्वा तदहरेव तर्पणं कुर्यात् । पित्रादित्रयाणां शस्त्रहतानां पार्वणपक्षे पार्वणविधिनाऽपराह्णे कार्यम् । सकृन्महालयस्तु सर्वपितृतृप्त्यर्थममावास्यायामन्यस्मिन्वा दिने कर्तव्य एव । इति चतुर्दशीश्राद्धप्रयोगः ।

आश्विनशुक्लप्रतिपदि मातामहश्राद्धम् । तदुक्तं सिन्धौ—

जातमात्रोऽपि दौहित्रो विद्यमानेऽपि मातुले ।

कुर्यान्मातामहश्राद्धं प्रतिपद्याश्विने सिते ॥

इदं श्राद्धमनुपनीतोऽपि कुर्यादिति बहवः । इदं सपिण्डकमेव कार्यमिति चन्द्रिकायाम् । पिण्डरहितमिति कमलाकरः । इदमेव युक्तमिति प्रतिभाति । प्रतिपत्प्रयुक्तश्राद्धे पिण्डदाननिषेधात् । जीवत्पितृकस्यापि पिण्डदाननिषेधाच्च । इदं च जीवत्पितृकेणैव कार्यमिति शिष्टाः । उक्तं च ग्रन्थान्तरे—

१ क. ख. यून्। मृ° । २ क. ख. °ति प्रतिपदि प्र° ।

गर्भाच्च्युतो हि दौहित्रः कुर्यात्पितरि जीवति ।
श्राद्धं मातामहानां च पक्षान्तादपरेऽहनि ॥ इति ।

अत्र मातामह्यादीनां नोल्लेखः ।

प्रतिपद्याश्विने शुक्ले दौहित्रस्त्वेकपार्वणम् ।
श्राद्धं मातामहं कुर्यात्सपिता संगवे सदा ॥

इति वचनात् । केचित्सपत्नीकोल्लेखस्त्वेकपार्वणभङ्गाभावात्कर्तव्य एवेत्याहुः । इदं जीवत्पितृकेण पञ्चधा विभक्तस्य दिनस्य द्वितीयभागे संगवकाले कार्यम् । सपिता संगव इत्युक्तत्वात् । मृतपितृकेण त्वपराह्णे कार्यमिति केचित् । पार्वणविधानाज्जीवत्पितृकेणाप्यपराह्णे कार्यमिति कौस्तुभे ।

अथ प्रयोगः । देशकालौ स्मृत्वाऽस्मन्मातामहमातुःपितामहमातुःप्रपितामहानां शर्मणां गोत्राणां वसुरुद्रादित्यस्वरूपाणां सपत्नीकानामेतेषां तृप्त्यर्थमाश्विनशुक्लप्रतिपच्छ्राद्धं सदैवं सांकल्पविधिनाऽन्नेन हविषा सद्यः करिष्य इति संकल्प्य पुरूरवार्द्रववैश्वदेवसहितं पूर्वोक्तसांकल्पविधानेन सर्वं कृत्वा तद्वर्गमात्रस्य सपत्नीकस्य तदहरेव श्राद्धान्ते शुक्लतिलैस्तर्पणं कृत्वा शेषमिष्टैः सह भुञ्जीतेति । इति दौहित्रप्रतिपच्छ्राद्धप्रयोगः ।

अथ ग्रहणश्राद्धम् । तच्च चन्द्रसूर्ययोर्ग्रहणे स्पर्शकाले रात्रावप्याशौचमध्येऽपि षड्दैवत्यमामान्नेन हिरण्येन वा सांकल्पविधिना कार्यम् । नैमित्तिकत्वात्कामकालौ दैवौ । अकरणे प्रत्यवायश्रवणान्नित्यत्वम् । अतः पुरूरवार्द्रवावित्यन्ये । ग्रहणनिमित्तं श्राद्धं करिष्य इति संकल्पः । अत्र भोक्तृसंभवे त्वन्नेनापि कार्यमित्यपरार्कः । घृतेन भोजयेद्विप्रान्घृतं भूमौ समुत्सृजेदिति वायवीयोक्तेः । विज्ञानेश्वरस्तु ग्रहणश्राद्धे भोक्तुर्दोषो दातुस्त्वभ्युदय इत्याह । इति ग्रहणश्राद्धम् ।

अथार्धोदयः । सिन्धौ महाभारते—

अमार्कपातश्रवणैर्युक्ता चेत्पौषमाघयोः ।
अर्धोदयः स विज्ञेयः कोटिसूर्यग्रहैः समः ॥

पौषकृष्णामावास्या सूर्यवासरश्रवणनक्षत्रव्यतीपातयोगैर्युक्ता चेदर्धोदयसंज्ञको योगविशेषो ज्ञेय इत्यर्थः । माघामायां व्यतीपात इत्यादिवाक्यानि तानि पौर्णमास्यन्तमासपराणि । दिवैव योगः शस्तोऽयं न तु रात्रौ कदाचनेति तत्रैव । इत्यर्धोदयः ।

अथ पद्मकयोगः । तदाह शङ्खः—

यदा विष्टिर्व्यतीपातो भानुवारस्तथैव च ।
पद्मकं नाम तत्प्रोक्तमयनाच्च चतुर्गुणम् ॥ इति ।

सिन्धौ व्यासः—सिनीवाली कुहूर्वाऽपि यदि सोमदिने भवेत् ।
गोसहस्रफलं दद्यात्स्नानं वै मौनिना कृतम् ॥ इति ।

निर्णयामृते विष्णुपुराणे—

अमावास्या यदा मैत्रविशाखास्वातियोगिनी ।
श्राद्धे पितृगणस्तृप्तिं तदाऽऽप्नोत्यष्टवार्षिकीम् ॥
अमावास्या यदा पुष्ये रौद्रर्क्षे वा पुनर्वसौ ।
द्वादशाब्दीं तदा तृप्तिं प्रयान्ति पितरोऽर्चिताः ॥ इति ।

मैत्रमनूराधानक्षत्रम् । रौद्रमार्द्रा । हेमाद्रौ शङ्खः—

अमावास्या तु सोमेन सप्तमी भानुना सह ।
चतुर्थी भूमिपुत्रेण सोमपुत्रेण चाष्टमी ॥
चतस्रस्तिथयस्त्वेताः सूर्यग्रहणसंनिभाः ।
स्नानं दानं तथा श्राद्धं सर्वं तत्राक्षयं भवेत् ॥

अथ महाव्यतीपातसंज्ञको योगविशेषः । हेमाद्रौ बृहन्मनुः—

श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तके ।
यद्यमा रविवारेण व्यतीपातः स उच्यते ॥

नागदैवतमाश्लेषा । मस्तको मृगशिरः । प्रथमपाद इत्यन्ये । स च सर्वपापितिति कमलाकरः । इति महाव्यतीपातः ।

चैत्रकृष्णत्रयोदश्यां महावारुणीसंज्ञो योगविशेषः । तदुक्तं निर्णयसिन्धौ स्कान्दे—

वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी ।
गङ्गायां यदि लभ्येत कोटिसूर्यग्रहैः समा ॥
शुभयोगसमायुक्ता शनौ शतभिषा यदि ।
महामहेति विख्याता त्रिकोटिकुलमुद्धरेत् ॥

वारुणं शततारका । तत्रैव ब्राह्मे—

मधौ कृष्णत्रयोदश्यां शनौ शतभिषा युता ।
वारुणीति समाख्याता शुभेऽति महती स्मृता ।

तत्रैव ज्योतिषे—

---

१ क. ख. 'भे तु म°'।

चैत्रासिते वारुणऋक्षयुक्ता त्रयोदशी सूर्यसुतस्य वासरे ।
योगे शुभे सा महती महात्मा गङ्गाजलेऽर्कग्रहकोटितुल्या ॥
इति वारुणीयोगः ।

वैशाखशुक्लद्वादश्यां व्यतीपातसंज्ञको योगविशेषः । हेमाद्रौ ज्योतिःशास्त्रे—

पञ्चाननस्थौ गुरुभूमिपुत्रौ मेषे रविः स्याद्यदि शुक्लपक्षे ।
पाशाभिधाना करभेण युक्ता तिथिर्व्यतीपात इतीह योगः ॥

पञ्चाननः सिंहः । पाशाभिधाना तिथिर्द्वादशी । करभं हस्तः । एतेष्वर्धोदयादियोगविशेषेषु अर्धोदयनिमित्तं श्राद्धं करिष्ये पद्मकयोगनिमित्तं श्राद्धं करिष्य इति यथायथं संकल्पं कृत्वा दर्शवत्षड्दैवत्यं सांकल्पविधिना श्राद्धं कुर्यात् । नैमित्तिकत्वात्कामकालौ देवौ । दर्शवच्छ्राद्धात्पूर्वं तर्पणम् । इत्यर्धोदयादिश्राद्धानि ।

अथ माघशुक्लाष्टमी भीष्माष्टमी । तस्यां भीष्मोद्देशेन तर्पणं श्राद्धं च कुर्यात् । तदुक्तं हेमाद्रौ पाद्मे—

माघे मासि सिताष्टम्यां सतिलं भीष्मतर्पणम् ।
श्राद्धं च ये नराः कुर्युस्ते स्युः संततिभागिनः ॥ इति ।

भारतेऽपि—शुक्लाष्टम्यां तु माघस्य दद्याद्भीष्माय यो जलम् ।
संवत्सरकृतं पापं तत्क्षणादेव नश्यति ॥ इति ।

अत्र श्राद्धं काम्यं फलश्रवणात् । तर्पणं तु नित्यम् ।

ब्राह्मणाद्याश्च ये वर्णा दद्युर्भीष्माय नो जलम् ।
संवत्सरकृतं तेषां पुण्यं नश्यति सत्तम ।

इति वचनात् । एतज्जीवत्पितृकस्यापि भवति । जीवत्पिताऽपि कुर्वीत तर्पणं यमभीष्मयोरिति वचनात् । एतच्चापसव्येन कार्यमिति दिवोदासीये । श्राद्धं त्वेकोद्दिष्टमेव ।

अपुत्रा ये मृताः केचित्स्त्रियो वा पुरुषोऽपि वा ।
तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणम् ॥

इति सिन्धौ वचनात् ।

अथ प्रयोगः । माघशुक्लाष्टम्यां कृतनित्यक्रियो देशकालौ संकीर्त्य ममसंवत्सरकृतपापनिरासपूर्वकाविच्छिन्नसंतत्यभिवृद्धिद्वारा श्रीपरमेश्वर-

१ ग 'चैसित' । २ ग 'जलार्क°' । ३ ग '°त्यभीष्टसिद्धिद्वा' ।

प्रीत्यर्थं माघशुक्लभीष्माष्टम्यां भीष्मतर्पणं करिष्य इति संकल्प्य प्राचीनावीती तिलोदकेन मन्त्रैस्तर्पयेत् । ते च मन्त्राः—

भीष्मः शांतनवो वीरः सत्यवादी जितेन्द्रियः ।
आभिरद्भिरवाप्नोतु पुत्रपौत्रोचितां क्रियाम् ॥
वैयाघ्रपद्यगोत्राय सांकृत्यप्रवराय च ।
अपुत्राय ददाम्येतज्जलं भीष्माय वर्मणे ॥ २ ॥
वसूनामवताराय शंतनोरात्मजाय च ।
अर्घ्यं ददामि भीष्माय आबालब्रह्मचारिणे ॥ ३ ॥

इति त्रिभिर्मन्त्रैस्तर्पयित्वाऽनेन तर्पणेन भीष्मस्वरूपी भगवान्परमेश्वरः प्रीयतामिति कर्मेश्वरायार्पयेत् । इति तर्पणप्रयोगः ।

अथ श्राद्धप्रयोगः । मध्याह्ने देशकालौ संकीर्त्याविच्छिन्नसंतानाभिवृद्धिकामोऽपुत्रस्य भीष्मवर्मणो वैयाघ्रपद्यगोत्रस्य वसुरूपस्य तृप्त्यर्थं भीष्माष्टमीप्रयुक्तं श्राद्धं सपिण्डमेकोद्दिष्टेन विधिनाऽन्नेन हविषा सद्यः करिष्य इति संकल्प्य पूर्ववदेकोद्दिष्टेन विधिना श्राद्धं कृत्वाऽपरेद्युः प्रातर्भीष्मवर्माणं वैयाघ्रपद्यगोत्रं वसुरूपं स्वधा नमस्तर्पयामीति तर्पयेत् । इति भीष्माष्टमीश्राद्धम् ।

अथ नैमित्तिकतिथिश्राद्धानि । पराशरमाधवीये देवलः—

तृतीया रोहिणीयुक्ता वैशाखस्य सिता तु या ।
मघाभिः सहिता कृष्णा नभस्ये तु त्रयोदशी ॥
तथा शतभिषग्युक्ता कार्तिके नवमी तथा ।

अत्र श्राद्धं कुर्यादित्यन्वयः । अत्र वैशाखशुक्लतृतीयायां रोहिणीयोगे श्राद्धं युगादिश्राद्धवत् । नैमित्तिकत्वात्कामकालौ देवौ । भाद्रपदकृष्णत्रयोदश्यां मघायोगे श्राद्धमुक्तमेव । कार्तिकशुक्लनवम्यां शततारकायोगे [श्राद्धं] युगादिश्राद्धवत् । अत्रापि नैमित्तिकत्वात्कामकालौ देवौ ।

अथ पौर्णमासीश्राद्धानि । तत्रैव यमः—

आषाढ्यामथ कार्तिक्यां माघ्यां त्रीन्पञ्च वा द्विजान् ।
तर्पयेत्पितृपूर्वं तु तदस्याक्षय्यमुच्यते ॥

अत्र पौर्णमासीषु पिण्डदाननिषेधात्सांकल्पिकविधिना षड्दैवतं श्राद्धं कुर्यात् । पुरूरवार्द्रवौ देवौ ।

१ ग. °प्नोति पु° । २ ग. 'ग्रह°' । ३ ग. °कल्पवि° ।

अथ गोष्ठीश्राद्धं भविष्यपुराणे—

गोष्ठ्यां यत्क्रियते श्राद्धं गोष्ठीश्राद्धं तदुच्यते।
बहूनां विदुषां प्राप्तौ सुखार्थं पितृतृप्तये॥

इदं गवां निवासस्थाने कर्तव्यमिति केचित्। विद्वत्सभायां श्राद्धकथाप्रसङ्गेनेत्यन्ये। अत्र फलश्रवणात्काम्यश्राद्धवत्प्रयोगः। [इति गोष्ठीश्राद्धम्।

अथ शुद्धिश्राद्धम्।] माधवीये प्रचेताः—

क्रियते शुद्धये यत्तु ब्राह्मणानां तु भोजनम्।
शुध्यर्थमिति तत्प्रोक्तं श्राद्धं पार्वणवत्स्मृतम्॥

इदं शुद्धिश्राद्धं दर्शवत्। शुद्धिश्राद्धं प्रायश्चित्ताङ्गमिति मैथिलाः। इति शुद्धिश्राद्धम्।

अथ दैविकं श्राद्धम्। सिन्धौ भविष्यपुराणे—

देवानुद्दिश्य यच्छ्राद्धं तत्तु दैविकमुच्यते।
हविष्येण विशेषेण सप्तम्यादिषु यत्नतः॥ इति।

तन्नित्यश्राद्धवत्कुर्यात्। द्वादश्यादिषु यत्नत इति पारस्करपाठः। इदं श्राद्धं त्रेधाविभक्तदिनस्य पूर्वभागे पूर्वाह्णे कार्यम्। पूर्वाह्णे दैविकं कुर्यादिति वचनात्। अत्र तिथिरपि पूर्वाह्णव्यापिनी ग्राह्या। कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिरिति स्मरणात्। अत्रापि पूर्वाह्णशब्देन संगवकालो गृह्यते। आमश्राद्धवत्। अत्र देवशब्देन स्वेष्टदेवा गृह्यन्ते। अपि वा विश्वे देवाः। तेषां श्राद्धविधौ संनिवेशात्। विश्वे देवाः सर्वे देवा इति श्रुतेश्च। नित्यश्राद्धवदित्युक्तत्वान्नित्यश्राद्धातिदेशः। तेनात्र निमन्त्रणावाहनाग्नौकरणपिण्डदानविकिरविसर्जनकर्तृमोक्तृनियमा न सन्तीति सिद्धम्। युग्मा ब्राह्मणा दैविकत्वात्। अथ प्रयोगः। देशकालौ स्मृत्वा विश्वेषां देवानां तृप्त्यर्थं श्राद्धं करिष्य इति संकल्प्य पार्वणश्राद्धोक्तदैविकवदर्चनादिविधिना नित्यश्राद्धवत्कुर्यात्। इति दैविकश्राद्धम्।

अथौपचयिकश्राद्धम्। तदुक्तं भविष्ये—

शरीरोपचये श्राद्धमर्थोपचय एव च।
पुष्ट्यर्थमेतद्विज्ञेयमौपचायिकमुच्यते॥

शरीरोपचये शरीरोपचयहेतुभूतशान्त्यादिप्रयोगवदिति चन्द्रिकाकारः। उपचयो वृद्धिः। अत्रापि दर्शश्राद्धवत्प्रयोगः। काम्यत्वाद्धूरिलोचनौ।

अथ सद्यःश्राद्धम्। तदाह चन्द्रिकायां हारीतः—

तीर्थे द्रव्योपपत्तौ च न कालमवधारयेत्।
पात्रं च ब्राह्मणं प्राप्य सद्यः श्राद्धं विधीयते॥

तीर्थे गङ्गादौ। द्रव्योपपत्तावलभ्यश्राद्धीयद्रव्यप्राप्तौ चामावास्याप-राह्णादिरूपः कालो न प्रतीक्षितव्य इत्यर्थः। सिन्धौ मार्कण्डेयः—

यदा च श्रोत्रियोऽभ्येति गृहं वेदविदग्निचित्।
तेनैकेनापि कर्तव्यं श्राद्धं च विधिवच्छुभम्॥

इदं चापिण्डकं कार्यमिति हेमाद्रिः। एतज्जीवत्पितृकोऽपि कुर्यात्।

उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे।
तीर्थे ब्राह्मण आयाते पडेते जीवतः पितुः॥

इति मैत्रायणीयपरिशिष्टोक्तेः।

अथैच्छिकश्राद्धम्। तदुक्तं मार्कण्डेयपुराणे—

श्राद्धार्हद्रव्यसंपत्तौ तथा दुःस्वप्नदर्शने।
जन्मर्क्षे ग्रहपीडासु श्राद्धं कुर्वीत स्वेच्छया॥ इति।

अनयोर्दर्शवत्प्रयोगः।

अथ नवान्नश्राद्धम्। तदा च चन्द्रिकायां शातातपः—

नवोदके नवान्ने च नवच्छन्ने तथा गृहे।
पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च॥ इति।

नवेक्षवेपु चेहन्ते पितरो हि मघासु चेति वृद्धपराशरपाठः। नवोदके वर्षोपक्रम इति शूलपाणिः। आर्द्राप्रवेश इति गौडाः। नवकूपवाप्यादा-विरयपरे। वस्तुतस्तु नवतीर्थोदक इति युक्तमिति चन्द्रिकाकारः। नव-च्छन्ने नवागारसंपादन इति स एव। पुराणेऽपि गृहे नवाच्छादने कृत इति केचित्। नवान्नप्राशनकाल उक्तो ज्योतिःशास्त्रे—

ज्येष्ठाश्लेषार्धगे सूर्ये मृगमैत्रानिलात्मके।
नवान्नैर्भोजनं श्राद्धं जन्मचन्द्रतिथौ न च॥
आश्लेषाकृत्तिकाज्येष्ठामूलाजपदभेषु च।
भृगुभौमदिने रिक्ते तिथौ नाद्यान्नवोदनम्॥
वृश्चिके शुक्लपक्षे तु नवान्नं शस्यते बुधैः।

---

१ ग. °रे। न°। २ ग. °ति च°।

अतः कृष्णपक्षे नेति गौडाः। इदं च श्राद्धमाग्रयणानन्तरमेव कर्तव्यम्। तत्पूर्वं नवान्नप्राशनेऽनधिकारात्। श्राद्धेऽकृताग्रयणधान्यनिषेधाच्च। अत्र कामकालौ देवौ। नवान्नलम्भने देवौ कामकालौ सदैव हीति वचनात्। अन्यत्सर्वं दर्शश्राद्धवत्।

इति नवान्नश्राद्धम्। अथ तीर्थादियात्रागमनकाले घृतश्राद्धम्। तदुक्तं विष्णुपुराणे—

गच्छन्देशान्तरं यस्तु श्राद्धं कुर्यात्स सर्पिषा।
यात्रार्थमिति तत्प्रोक्तं प्रवेशे च न संशयः॥ इति।

देशान्तरगमनं तीर्थादियात्रारूपम्। प्रवेशश्च तत्समाप्त्यनन्तरं गृहप्रवेशः। स्कन्दपुराणेऽपि—

उपोष्य रजनीमेकां प्रातःश्राद्धं विधाय च।
गणेशं ब्राह्मणान्नत्वा भुक्त्वा प्रस्थितवान्सुधीः॥

पूर्वदिने उपोष्य द्वितीयेऽह्नि श्राद्धं कृत्वा भुक्त्वा गणेशादीन्नत्वा प्रस्थानं कुर्वीतेति चन्द्रिकाकारः। हेमाद्रिस्तु श्राद्धोत्तरदिने प्रस्थानमित्याह। उपवासात्प्राग्मुण्डनं च कार्यमिति कमलाकरः। प्रायश्चित्तार्थयात्रापाङ्गमेतदित्यन्ये। कार्पटिकवेषेण तीर्थगमनं एतदित्यपरे। इदं च श्राद्धं वक्ष्यमाणतीर्थश्राद्धवत्षड्दैवतं नवदैवतं द्वादशदैवतं चैकोद्दिष्टसहितं सर्वदैवतं वा कार्यम्। अत्र घृतं प्रधानम्। भक्ष्यभोज्यादिकं तु व्यञ्जनत्वेन दातव्यम्। विधिस्त्वर्घ्यावाहनविप्राङ्गुष्ठनिवेशनतृप्तिप्रश्नविकिरविसर्जनवर्जनादितीर्थश्राद्धवत्।

अथ प्रयोगः। यात्रां चिकीर्षुर्ज्योतिःशास्त्रोक्तप्रकारेण प्रस्थानदिनं निश्चित्य तत्पूर्वेद्युरुपोष्य श्वोभूतेऽपराह्णे देशकालौ संकीर्त्य महालयपक्षसर्वान्पितॄनुद्दिश्यामुकयात्रां कर्तुमादौ तदङ्गत्वेन विहितं समस्तपितॄनुद्दिश्य घृतश्राद्धं करिष्य इति संकल्प्य पुरूरवार्द्रवसंज्ञकवैश्वदेवार्थं द्वावेकं वा ब्राह्मणं निमन्त्र्य पित्रार्थं सकृन्महालयवन्निमन्त्र्यार्घ्यावाहनवर्जं परिवेषणान्तं कुर्यात्। अग्नौकरणं कृताकृतम्। करणपक्षे घृतेनैव पाणिहोमः। तस्यैव मुख्यत्वात्। अन्ननिवेदनकाल इदमन्नमित्यत्रेदं घृतं हविरित्यादिप्रयोगः। अन्यत्सर्वं वक्ष्यमाणतीर्थश्राद्धवत्। तर्पणं तु श्राद्धात्पूर्वं दर्शवत्। एवं घृतश्राद्धं समाप्य वैश्वदेवादिकं कृत्वा श्राद्धशेषमिष्टैः सह

१ ग. कार्यम्। २ ग. 'र्थं भविष्यत्'। ३ ग. 'मने(ना)त्यादि पुराणे। इ°।

भुञ्जीत । ततो देशकालौ संकीर्त्य श्रीपरमेश्वरप्रीत्यर्थममुककामनयाऽमुकप्रायश्चित्तार्थं वाऽमुकयात्रां करिष्य इति संकल्प्य गणेशं कुलदेवतादीन्ब्राह्मणान्वृद्धान्साधूंश्च संपूज्य नत्वा पितॄंश्च नमस्कृत्य विप्राज्ञया सुमुहूर्ते सुमुखश्चैकदन्तश्चेत्यादिमङ्गलमन्त्रान्पठन्मङ्गलशकुनदर्शनपूर्वकं प्रस्थाय ग्रामं प्रदक्षिणीकुर्वन्गच्छेत् । तद्दिने क्रोशादर्वाग्ग्रामान्तरं गत्वा तत्रैव वसेत् । घृतश्राद्धदिने श्राद्धानन्तरं सुमुहूर्तालाभे श्राद्धोत्तरदिने प्रस्थानं कुर्यात् ।

अथ प्रसङ्गात्संक्षेपेण तीर्थयात्राविधिरुच्यते । तत्र गमनकाले कार्पटीवेषं विधाय गच्छेत् । गयायामेवैष कार्पटीवेष कार्य इति चन्द्रिकायाम् । सर्वतीर्थयात्रायामपीति त्रिस्थलीसेतौ भट्टाः । कार्पटीवेषस्तु कापायवस्त्रकञ्चुकादिनिर्मितः काश्यां वीवधग्राहकेषु प्रसिद्धः । वीवधः कावडीति भाषया प्रसिद्धः । गन्धमाल्यशस्त्रकञ्चुकादिपरिहारः कार्पटीवेष इति त्रिस्थलीसेतौ । ततो मार्गे प्रतिदिनं प्रातः स्नात्वा प्रातःसंध्यावन्दनं नित्यक्रियां च कृत्वोपोषितः शुचिब्रह्मचर्यादिनियमवान्प्रतिग्रहविवर्जितश्चाण्डालस्पर्शादिरहितः सन्निवासस्थलं गत्वा तत्र माध्याह्निकस्नानसंध्याभोजनादिकं विधाय काले सायंसंध्यावन्दनं कृत्वा तत्रैव वसेत् । तीर्थं गच्छंश्चरेत्संध्यास्तिस्र एकत्र मानव इति भारतात् । एवं प्रतिदिनं गच्छेत् । मार्गे मूत्रपुरीषोत्सर्गे यथोक्तं शौचं कृत्वा गच्छेत् । चाण्डालरजस्वलादिस्पर्शे स्नायात् । यत्रानेनाहं स्पृष्ट इति ज्ञानं नास्ति तत्र न स्पर्शदोषः ।

देवयात्राविवाहेषु यज्ञेषु प्राकृतेषु च ।
उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टिर्न दुष्यति ॥

इति षट्त्रिंशन्मतात् । तदाऽप्यनिवार्यस्पर्शे देवदर्शनपूजायात्रादि कार्यमेव । भोजनादौ तु स्नानमेवेति त्रिस्थलीसेतुसारे भट्टोजीदीक्षिताः । मार्गे त्वाशौचप्राप्तौ तत्रैव स्थित्वा शुद्धौ सत्यां गच्छेत् । मार्गवैषम्यादिना गत्यन्तराभावे सति तीर्थयात्रायामाशौचं नास्तीति पैठीनसिः । एवमेव रजस्वला स्त्री चत्वारि दिनानि स्थित्वा पञ्चमेऽहनि व्रजेत् । यानच्छत्रोपानत्पुनर्भोजनरहितस्तीर्थयात्रां गच्छन्पूर्णं फलं प्राप्नोति । छत्रोपानद्युक्तस्तु त्रिपादं फलं प्राप्नुयात् । नरयानसहितोऽर्धं फलं

१ ग धैर्ये॰ । २ क स. तद्यात्व॰ । ३ ग शुची ।

प्राप्नोति। हययाने प्रतिग्रहकरणे च निष्फलमेव। गोयानं तु सर्वथा निषिद्धमेव। गोयाने गोवधः प्रोक्त इति मात्स्यात्। इदं शक्तस्य। अशक्तस्योक्तं कौर्मे—

नरयानं चाश्वतरीहयादिसहितो रथः।
तीर्थयात्रास्वशक्तानां यानं दोषकरं न हि॥ इति।

एतत्सर्वं यानेन सकलमार्गातिवाहने ज्ञेयम्। किंचिद्यानगमने तु क्रोशयोजनादिगणनया फलतारतम्यमूह्यम्। नावा गमनं च निषिद्धम्। यत्र च मार्गप्रदेशे नद्यातिक्रमे पद्भ्यां गमनं न संभवति यत्र वा शङ्खोद्धारगङ्गासागरादौ च तत्र नौकागमने न दोषः। अनेकदिननौकायानमात्रसाध्यानि यानि तीर्थानि समुद्रद्वीपनिष्ठानि तत्र द्विजैर्न गन्तव्यम्। यदा तु मार्गे कर्मनाशा नद्युपस्थिता तदा तज्जलस्पर्शो यथा न भवति तथा गन्तव्यम्।

कर्मनाशाजलस्पर्शात्करतोयाविलङ्घनात्।
गण्डकीबाहुतरणात्पुनः संस्कारमर्हति॥

इति स्मरणात्। तथा चाङ्गवङ्गादिदेशगमनं निषिद्धं तत्रापि यात्रोद्देशेन गमने न दोषः।

अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च।
तीर्थयात्रां विना यातः पुनः संस्कारमर्हति॥

इति स्मृतेः। यात्रायां ब्रह्मचर्यत्वेऽप्यृतौ भार्यागमने न दोषः। गृहस्थस्य सपत्नीकस्यैव तीर्थयात्राधिकारः। न तु भार्यारहितस्य। पत्नीसाहित्यं च तस्या गुणवत्त्वे वेदितव्यम्। प्रायश्चित्तार्थयात्रायां भार्यारहितस्याप्यधिकारः। विधवायास्तु पुत्रज्ञात्याद्यनुमतेनैवाधिकारः। न स्वातन्त्र्येण। सधवायास्तु भर्तृविना नैवाधिकारः। भर्त्रा सहैवाधिकारः। ब्रह्मचारिणस्तु गुरुनियुक्तस्यैवाधिकारः। न तद्रहितस्य। विधुरवानप्रस्थयतिक्षत्रियवैश्यशूद्राणामप्यधिकारः। तत्रापि क्षत्रियस्य वैश्यस्य ब्राह्मणपुरःसरस्यैवाधिकारः। शूद्रस्य तु विप्रसेवादिना। मात्राद्यस्थि प्रक्षेप्तुकामस्य सर्वथैवाधिकारः। अस्थिनयनमपि मातृपितृकुलजानाम्। उक्तं च—

---

१ ग °स्य नरस्य ग्रा°।

मातुः कुलं पितुः कुलं वर्जयित्वा नराधमः ।
अस्थीन्यन्यकुलोत्थानि नीत्वा चान्द्रायणं चरेत् ॥

इदं च द्रव्यादिलोभविषयि(य)कम् । तदाह सिन्धावाश्वलायनः—

जीवनार्थं परास्थीनि धृत्वा तीर्थं प्रयाति यः ।
मातापित्रोर्विना सोऽपि पतितः परिकीर्तितः ॥ इति ।

दयादिना परास्थिनयने न दोषः । नयने फलश्रवणात् । मात्राद्युद्देशेन स्नानमुक्तं मार्कण्डेयपुराणे—

मातरं पितरं जायां भ्रातरं सुहृदं गुरुम् ।
यमुद्दिश्य निमज्जेत अष्टमांशं लभेत सः ॥

पैठीनसिरपि—

प्रतिकृतिं कुशमयीं तीर्थवारिणि मज्जयेत् ।
मज्जयेच्च यमुद्दिश्य सोऽष्टभागं फलं लभेत् ॥

कुशप्रतिकृतिः कुशप्रतिमैव कार्येत्येके । वक्ष्यमाणमन्त्रलिङ्गात्तन्नाम्ना ग्रन्थिबन्धनमात्रं प्रतिकृतिरित्यपरे । कुशप्रतिमज्जने मन्त्रः—

कुशोऽसि कुशपुत्रोऽसि ब्रह्मणा निर्मितः स्वयम् ।
त्वयि स्नाते स च स्नातो यस्येदं ग्रन्थिबन्धनम् ॥ इति ।

इदं परार्थस्नानं प्रतिकृतिस्नपनं च जीवतामेवोद्देशेन कार्यम् । मृतानां तु तर्पणश्राद्धादिकमेव । यदि वाणिज्यराजसेवादिप्रसङ्गेन तीर्थं प्राप्नोति तदाऽपि स्नानं कार्यम् । तेन स्नानजं फलं प्राप्नोति । न तु तीर्थयात्रोद्भवम् । परवेतनं गृहीत्वा गच्छति चेत्षोडशांशं फलं प्राप्नोति । परान्नभुक्त्वानोऽपि तथैव । तीर्थान्तरप्रसङ्गेन गच्छतो मध्ये तीर्थं प्राप्तं चेदर्धं फलं भवति । प्रभासखण्डे—

यश्चान्यं कारयेच्छक्त्या तीर्थयात्रां तथेश्वरः ।
स्वकीयद्रव्ययानाभ्यां तस्य पुण्यं चतुर्गुणम् ॥ इति ।

तीर्थादि गच्छन्यदि दैवात्परावृत्तस्तदा विशेषो गारुडे—

तीर्थं चलित्वा यः कोऽपि पुनरायाति वै गृहे ।
अनुज्ञातस्तु तैर्विप्रैः प्रायश्चित्तं समाचरेत् ॥ इति ।

मरणे तु तत्रैव—यस्तीर्थं संमुखो भूत्वा व्रजन्ननशने कृते ।
चेन्म्रियेदन्तराले तु ऋषीणां मण्डलं व्रजेत् ॥

१ ॥ 'लिनिव' ।

यस्तीर्थं व्रजन्नन्तराले मृतो यश्च मासोपवासादिरूपोपवासव्रतान्तराले मृतस्तयोरुभयोरप्यृषिलोकस्य प्राप्तिर्भवतीत्यर्थः । मार्गे पुण्यनदीप्राप्तौ विशेषश्चन्द्रिकायाम्—

मार्गेऽन्तरा नदीप्राप्तौ स्नानादिपरपारतः ।
अर्वागेव सरस्वत्या एष मार्गगतो विधिः ॥ इति ।

अत्रापि स्नानोपवासमुण्डनश्राद्धादि कार्यमेवेति कमलाकरः । अर्धं तीर्थफलं तस्येति वचनात् । वाणिज्यार्थं गते मुण्डनोपवासादि न कार्यमिति त्रिस्थलीसेतौ भट्टाः । तत्कार्यमेवेति कमलाकरः । तीर्थप्राप्तौ विधिः प्रभासखण्डे—

यानानि तु परित्यज्य भाव्यं पादचरैर्नरैः ।
लुठित्वा लोठनीं तत्र कृत्वा कार्पटिकाकृतिम् ॥ इति ।

यदि यानारूढः सोपानत्को वा गच्छेत्तदा तीर्थप्राप्तिदिने यावन्मार्गः पादचारेण गन्तुं शक्यस्तावति मार्गे यानोपानदादि परित्यज्य पादचारेण गत्वा यदा तीर्थं पश्येत्तदा लोठनीं लुठित्वा साष्टाङ्गं प्रणम्येत्यर्थः । कृत्वा कार्पटिकाकृतिमिति गृहान्निर्गमनसमये तदकरणेऽद्य प्रवेशदिने कर्तव्येत्यर्थः । काशीखण्डे—

यदह्नि तीर्थप्राप्तिः स्यात्तदह्नः पूर्ववासरे ।
उपवासः प्रकर्तव्यः प्राप्तेऽह्नि श्राद्धदो भवेत् ॥ इति ।
उपवासं ततः कुर्यात्तस्मिन्नहनि सुव्रत ।

इति पुराणान्तराच्च प्राप्तिदिनात्पूर्वदिने प्राप्तिदिने चोपवासोक्तेर्विकल्प इति कमलाकरः । उपवासासमर्थस्तूपवासप्रतिनिधिं नक्तं हविष्यान्नमित्यादिकं शक्त्यनुसारेण कुर्यात् । चन्द्रिकायां स्मृतिः—

पूर्वमाप्लवनं तीर्थे मुण्डनं तदनन्तरम् ।
ततः स्नानादिकं कुर्यात्पश्चाच्छ्राद्धं समाचरेत् ॥ इति ।

आप्लवनं मुसलस्नानम् । मन्त्रस्नानं तु मुण्डनोत्तरमेव ।

प्रथमं चालयेत्तीर्थं प्रणवेन जलं शुचि ।
अवगाह्य ततः स्नायाद्यथावन्मन्त्रयोगतः ॥

चालयेत्स्पृशेत् । प्रार्थनामन्त्रस्तु—

तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम ।
भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ॥

१ ग 'नादिह' । २ क ग २ ध ना कु ।

इमं मन्त्रं समुच्चार्य तीर्थे स्नानं समाचरेत् ।
अन्यथा तत्फलस्यार्धं तीर्थेशो हरति ध्रुवम् ॥ इति ।

प्रभासखण्डे—ॐ नमो देवदेवाय शितिकण्ठाय दण्डिने ।
रुद्राय चापहस्ताय चक्रिणे वेधसे नमः ॥
सरस्वती च गायत्री वेदमाता गरीयसी ।
संनिधात्री भवत्यत्र तीर्थे पापप्रणाशिनी ॥
सर्वेषामेव तीर्थानां मन्त्र एष उदाहृतः ।
इत्युच्चार्य नमस्कृत्वा(त्य) स्नानं कुर्याद्यथाविधि ॥

जाबालिः—प्रवाहाभिमुखो मज्जेद्यत्राऽऽपः प्रवहन्ति वै ।
स्थावरेषु च सर्वेषु आदित्याभिमुखस्तथा ॥ इति ।

मुण्डने तु विशेषः स्कान्दे—
मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः ।
वर्जयित्वा कुरुक्षेत्रं विशालं विरजं गयाम् ॥ इति ।

सर्वतीर्थशब्दो महातीर्थपरः । विरजं लोणारं क्षेत्रं दक्षिणदेशस्थमिति कमलाकरः । उत्कलप्रदेशे यत्र धर्मराजेन गयासुरनाभौ विरजाद्रिः स्थापितः स विरज इति त्रिस्थलीसेतुसारे । नैमिषं पुष्कलं गयामिति च क्वचित्पाठः । विशालं पुष्करं गयामिति च क्वचित् । इदं च वपनं श्मश्रुपूर्वकं केशलोमनखानां भवति । तत्राप्युदक्संस्थतायै दक्षिणश्मश्रुवपनमादौ । उदङ्मुखः प्राङ्मुखो वोपविश्य शिखाकक्षोपस्थवर्जं कारयेत् । तीर्थे निषिद्धदिनेऽपि पत्न्यां गर्भिण्यां विवाहाद्यनन्तरमपि मुण्डनं कार्यम् । जीवत्पितृकेणापि कार्यम् । तच्च प्रयागे प्रतियात्रमन्यतीर्थे त्वाद्ययात्रायामेवेति कमलाकरः । अकृतचूडस्यापि प्रयागे मुण्डनं कार्यं नान्यत्रेति स एव । यतिभिस्तीर्थेऽपि ऋतुसंधिं विना नैव कार्यम् । आहिताग्निना तु पर्वव्यतिरिक्तकालेऽपि तीर्थनिमित्तकं मुण्डनं कार्यम् । विधवया च कार्यम् । प्रयागे तु सधवानामपि समूलं भवतीति भट्टाः । कमलाकरस्तु—

सर्वान्केशान्समुद्धृत्य च्छेदयेदङ्गुलद्वयम् ।
एवमेव हि नारीणां शस्यते वपनक्रिया ॥

इति वचनादिदमेव युक्तमित्याहं । इदं च मुण्डनं दशमासानन्तरं पुनस्तीर्थप्राप्तौ कर्तव्यम् ।

---

१ क. ख. °त्वा रजस्वला । वि° । २ ग. °चूडेनापि ।

संवत्सरे द्विमासोने पुनस्तीर्थं व्रजेद्यदि ।
मुण्डनं चोपवासं च ततो यत्नेन कारयेत् ॥

इति स्मरणात् । दशमासोत्तरं प्राप्तावावश्यकं कार्यं यत्नेनेत्युक्तत्वात्। अन्तराले तु फलेच्छया भवति न तु नियमत इति । एतत्प्रयागातिरिक्तसर्वतीर्थेषु । प्रयागे तु दशमासात्प्रागपि प्रतियात्रं मुण्डनं नियतमेव। तच्च योजनत्रयाधिकदेशागतेन कार्यम् । न तन्न्यूनदेशागतेन ।

प्रयागे प्रतियात्रं तु योजनत्रय इष्यते ।
क्षौरं कृत्वा तु विधिवत्ततः स्नायात्सितासिते ॥

इति वचनात् । छिन्नानि केशलोमनखादीनि तीर्थतीरे गर्तं कृत्वा तत्र निक्षिपेत् । गङ्गायां तु यथा स्वयमेव केशादीनि गङ्गाजले पतन्ति तथा वापयेत । अपि वा वायुनेरितानि जले यथा पतन्ति तत्र देश उपविष्टो वापयेत् ।

केशानां यावती संख्या छिन्नानां जाह्नवीजले ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥

इति वचनात् । स्नानोत्तरं तर्पणं ततस्तीर्थश्राद्धमिति चन्द्रिकायाम् । त्रिस्थलीसेतौ वचनम्—

प्रत्यावृद्धोदकस्नानं नद्यां वर्ज्यं द्विजातिभिः ॥ इति ।

यत्र स्थलविशेषे नद्यां विपरीतप्रवाहादि तत्र स्नानं न कार्यमित्यर्थः। निषेधान्तरमपि तत्रैव—

शाल्मलीतिन्तिणीनिम्बकरञ्जाश्च हरीतकी ।
कोविदारकपित्थार्कबदर्येरण्डशिग्रवः ॥
शेलुश्च खदिरश्चैषां स्नानं छायासु वर्जयेत् ।

बदरी च बिभीतका, इति पाठान्तरम् । सिन्धौ ब्रह्मपुराणम्—

अकालेऽप्यथवा काले तीर्थे श्राद्धं च तर्पणम् ।
अविलम्बेन कर्तव्यं नैव विघ्नं समाचरेत् ॥
यद्वैव दृश्यते तीर्थं तदा पर्वसहस्रकम् ॥ इति ।

एतच्च तीर्थस्नानतर्पणश्राद्धादि मलमासेऽपि कार्यम् । तथाऽऽशौचे रात्रावपि कृतभोजनोऽपि कुर्यात् । मुण्डनं तु परेद्युरेव पितृमृतिवत् ।

१ ग. 'न दि' । २ ग. 'रात्रे । अ' ।

श्राद्धं त्वामेन हेम्ना वा न त्वन्नेन । अत्रश्राद्धं तु रात्रौ भोजनोत्तरं च तीर्थप्राप्तौ द्वितीयदिने । आशौचे तु तदपगम एव । इदं चाऽऽकस्मिकतीर्थप्राप्तौ । न तु बुद्धिपूर्वकमाशौचादौ तीर्थप्राप्तिः कार्या । अत्र तर्पणं विवाहाद्यनन्तरे काले निषिद्धदिनेऽपि सतिलं कार्यम् । इदं च तर्पणमार्द्रवासा एव जले कुर्यात् । आर्द्रवासा जले कुर्यात्तर्पणाचमनं जपमिति वचनात् । तत्राऽऽदौ स्नानाङ्गतर्पणं कृत्वा पश्चात्तथैव देवर्षितर्पणं कृत्वा पितॄणामपि कार्यम् । संन्यासिना तु तीर्थेऽपि तर्पणश्राद्धादिकं न कार्यम् । स्नानादिकं तु कार्यमेव ।

अथ तीर्थश्राद्धम् । तच्च रात्रिसंध्ययोर्भुक्तवतश्च तीर्थप्राप्तौ द्वितीयदिने । आशौचे तीर्थप्राप्तावाशौचान्ते । मलमासे तीर्थप्राप्तौ तदा श्राद्धं कृत्वा शुद्धमासे पुनः कार्यमिति भट्टोजीदीक्षिताः । चन्द्रिकायां पद्मपुराणम्[3]—

तीर्थश्राद्धं प्रकुर्वीत पक्वान्नेन विशेषतः ।
आमान्नेन हिरण्येन कन्दमूलफलैरपि ॥

एतत्तीर्थजलसमीपे चेदामेन हेम्ना वा गृहे त्वन्नेनैवेति केचिद्व्यवस्थामाहुः ।

स्कन्दपुराणे—ब्राह्मणान्न परीक्षेत तीर्थक्षेत्रनिवासिनः ।

एतच्च श्राद्धार्हब्राह्मणालाभे वेदितव्यमिति त्रिस्थलीसेतुसारे । पातित्याद्यत्यन्तदोषयुक्तस्तु परिहर्तव्य एवेति स्मृतिरत्नावल्याम् ।

देवीपुराणे—श्राद्धं च तत्र कर्तव्यमर्घ्यावाहनवर्जितम् ।

तथा—अर्घ्यमावाहनं चैव द्विजाङ्गुष्ठनिवेशनम् ।
तृप्तिप्रश्नं च विकिरं तीर्थश्राद्धे विवर्जयेत् ॥

तथा—आवाहनं न दिग्बन्धो न दोषो दृष्टिसंभवः ।
सकारुण्यं च कर्तव्यं तीर्थश्राद्धं विचक्षणैः ॥

भविष्ये—आवाहनं विसृष्टिश्च तत्र तेषां न विद्यते ॥ इति ।

अग्नौकरणं नेति स्मृतिरत्नावल्याम् । कर्तव्यमिति बहवः । तच्च विप्रभोजने पाणावेव । यदा विप्राभावे तीर्थसमीपे कुशबटुषु श्राद्धं क्रियते तदा तीर्थजल एव होम इति गोपीनाथभट्टचाम् । तत्रैव देवलः—

१ क. ख. रात्र्यादौ ती° । २ ग. °हायानन्तरका° । ३ ग. °राणे । ती° ।

न पात्रं श्येनकाकादीन्पक्षिणः प्रतिषेधयेत् ।
तद्रूपाः पितरस्तत्र समायान्तीति वै श्रुतिः ॥

विष्णुधर्मोत्तरे—तीर्थश्राद्धे सदा पिण्डान्क्षिपेत्तीर्थे समाहितः ।
दक्षिणाभिमुखो भूत्वा पित्र्या दिक्सा प्रकीर्तिता ॥ इति ।

तीर्थश्राद्धमन्यद्वा सपुत्रविधवा नैव कुर्यात् ।

सपुत्रया न कर्तव्यं भर्तुः श्राद्धं कदाचनेति निषेधात् । केचित्पुत्रवत्याऽपि पुत्रासंनिधाने ब्राह्मणद्वारा श्राद्धं करणीयमित्याहुः । अपुत्रविधवया तु कार्यमेव । यतिरपि न कुर्वीत । न कुर्यात्सूतके भिक्षुः श्राद्धं पिण्डोदकक्रियामिति वचनात् । एतच्चानुपनीतेनापि कार्यमिति कमलाकरः । जीवत्पितृकेणापि कार्यम् ।

वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति ।
येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः ॥

इति स्मरणात् । अत्र तर्पणे श्राद्धे च पितरः पूर्वोक्तसकृन्महालयश्राद्धवज्ज्ञेयाः । अत्र पिण्डप्रदाने सर्वपिण्डान्ते सामान्यपिण्डं दद्यात् ।

ततः पिण्डमुपादाय हविषः संस्कृतस्य च ।
ज्ञातिवर्गस्य सर्वस्य सामान्यं पिण्डमुत्सृजेत् ॥

इति पृथ्वीचन्द्रोदयोदाहृतवचनात् । तर्पणेऽपि सामान्याञ्जलिमाब्रह्मस्तम्बेत्यादिधायवीयोक्तश्लोकद्वयेन दद्यादिति त्रिस्थलीसेतुसारे । अत्र तर्पणश्राद्धयोः समानोपादानाच्छ्राद्धाङ्गतर्पणं पृथक्कार्यमिति केचित् । अपि वा कालैक्यात्प्रसङ्गसिद्धिरित्यन्ये । तीर्थश्राद्धे काम्यत्वे धूरिलोचनौ । नित्यत्वे पुरूरवार्द्रवावेव । केचिद्धुर्धराविति वदन्ति । पठन्ति च—तीर्थे चैव धनुर्धराविति । तच्चिन्त्यम् । तीर्थश्राद्धं यथोक्तविधिना श्राद्धकरणाशक्तौ पूर्वोक्तानुकल्पैनेकब्राह्मणदर्भवद्वामहिरण्यपिण्डदानमात्रादिविधिना कुर्यात् । अशक्तौ तर्पणमात्रम् । अविभक्ता भ्रातरो युगपत्तीर्थे गताश्चेज्ज्येष्ठेनैव कार्यम् । विभक्तास्तु पृथगेव । नदीनां रजोदोषकाले तत्र स्नानादि न कुर्यात् । तदुक्तं सिन्धौ—

सिंहकर्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः ।
तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाः ॥ इति ।

---

१ क. ग. श्राद्धे यथोक्तविधिना पि ।

एकयोजनादिषड्योजनगान्ताः स्रवन्त्यः कुल्याः। ततो दशयोजनगान्ता अल्पनद्यः। ततश्चतुर्विंशतियोजनगान्ता नद्यः। तदधिकयोजनगान्ताः समुद्रगाश्च महानद्यः। यत्र च पुराणादिषु महानदीव्यपदेशस्ता अपि महानद्यः। महानदीनामपि रजोदोष उक्तो भविष्योत्तरपुराणे—

आदौ तु कर्कटे देवि महानद्यो रजस्वलाः।
त्रिदिनं तु चतुर्थेऽह्नि शुद्धाः स्युर्जाह्नवी यथा॥

महानद्यश्च ब्रह्मपुराणे—

गोदावरी भीमरथी तुङ्गभद्रा च वेणिका।
तापी पयोष्णी विन्ध्यस्य दक्षिणस्थाः प्रकीर्तिताः॥
भागीरथी नर्मदा च यमुना च सरस्वती।
विशोका च वितस्ता च विन्ध्यस्योत्तरतः स्थिताः॥
द्वादशैता महानद्यो देवर्षिक्षेत्रसंभवाः। इति।

गङ्गादिविषये तु देवलः—

गङ्गा च यमुना चैव प्लक्षजाता सरस्वती।
रजसा नाभिभूयन्ते ये चान्ये नदसंज्ञकाः॥

नदाश्च—*शोणसिन्धुहिरण्याख्याः कोकिलाहितघर्घराः*।
शतद्रुश्च नदाः सप्त पावनाः परिकीर्तिताः॥ इति।

अन्यत्र रजोदुष्टमपि जलं गङ्गाजलसंयुतं सददुष्टं भवति। अयं च रजोदोषस्तीरवासिनां नास्तीति योगयाज्ञवल्क्यः। वायुपुराणे—

अधिमासे जन्मदिने अस्ते च गुरुशुक्रयोः।
तीर्थयात्रा न कर्तव्या गयां गोदावरीं विना॥

पुराणान्तरे च—

गोदावर्यां गयायां च श्रीशैले ग्रहणद्वये।
सुरासुरगुरूणां च[1]मौढ्यदोषो न विद्यते॥

वायवीये—गयायां सर्वकालेषु पिण्डं दद्याद्विधानतः।
अधिमासे जन्मदिने अस्ते च गुरुशुक्रयोः॥
न त्यक्तव्यं गयाश्राद्धं सिंहस्थे च बृहस्पतौ।

पद्मपुराणे—काशीमुद्दिश्य यातानां सर्वः स्यात्समयः शुभः।
मङ्गलं सकलं वस्तु न किंचिद्धि विचारयेत्॥ इति।

---

१ ग. °किलो दि°।

तीर्थे संक्षेपतः सर्वप्रायश्चित्तमपि कुर्वन्ति शिष्टाः ।

अथ संक्षेपतस्तीर्थविधिप्रयोगः । तीर्थप्राप्तिदिनात्पूर्वदिने प्राप्तिदिने चोपोष्य कार्पटीवेषं विधाय पादुकायानादि परित्यज्य पादचारी तीर्थं दृष्ट्वा साष्टाङ्गं प्रणम्य तीर्थसमीपमेत्याक्षतगन्धपुष्पफलताम्बूलहिरण्यादियुक्तमञ्जलिममुकतीर्थाय नम इति दत्त्वा तत्रस्थान्द्विजांश्च साष्टाङ्गेन प्रणम्य तदनुज्ञया शरीरमलापकर्षस्नानं तूष्णीं कृत्वाऽऽर्द्रवासा ब्रह्मदण्डार्थं यथाशक्ति हिरण्यं ब्राह्मणानामग्रे निधाय समस्तसंपदिति श्लोकचतुष्टयं पठन्ब्राह्मणान्प्रदक्षिणीकृत्य साष्टाङ्गं प्रणम्य प्रार्थयेत् ।

सर्वे धर्मविवेक्तारो गोप्तारः सकला द्विजाः ।
मम देहस्य संशुद्धिं कुर्वन्तु द्विजसत्तमाः ॥
मया कृतं महाघोरं ज्ञातमज्ञातकिल्बिषम् ।
प्रसादः क्रियतां मह्यं शुभानुज्ञां प्रयच्छथ ॥
पूज्यैः कृतपवित्रोऽहं भवेयं द्विजसत्तमैः ।

मामनुगृह्णन्तु भवन्त इत्युक्त्वा विप्रानुमत्या यथाशक्ति प्रायश्चित्तं निश्चित्य देशकालौ स्मृत्वाऽमुकगोत्रस्यामुकशर्मणो मम जन्मान्तराभ्यासाज्जन्मप्रभृत्यद्ययावज्ज्ञानाज्ञानकामाकामसकृदसकृत्कृतकायिकवाचिकमानसिकसांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकातिपातकोपपातकलघुपातकसंकरीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरप्रकीर्णकपातकानां मध्ये संभावितपातकानां निरासार्थं युष्मदनुज्ञयाऽमुकप्राजापत्यात्मकप्रायश्चित्तप्रत्याम्नायभूतं गोनिष्क्रयद्रव्यं ब्राह्मणेभ्यो दातुमहमुत्सृज्य इति संकल्प्य तद्द्रव्यं ब्राह्मणेभ्यो दत्त्वाऽनेन प्रायश्चित्ताचरणेन सकलपापापहमहाविष्णुः प्रीयताम् । इति प्रायश्चित्तं कृत्वा पुनर्देशकालौ स्मृत्वा मम समस्तपापक्षयार्थमस्मिन्नमुकतीर्थे वपनं करिष्य इति संकल्प्य

आत्मनः शुद्धिकामश्च पितॄणां तृप्तिहेतवे ।
वपनं कारयाम्यद्य हे गङ्गे तव संनिधौ ॥
यानि कानि च पापानि ब्रह्महत्यासमानि च ।
केशानाश्रित्य तिष्ठन्ति तस्मात्केशान्वपाम्यहम् ॥

इति मन्त्रमुक्त्वा प्राङ्मुख उदङ्मुखो वा कक्षोपस्थवर्जं श्मश्रुकेशलोमनखानि वापयेत् । तीर्थान्तरे तु हे तीर्थ तव संनिधौ । समुद्रे हे सिन्धो तव संनिधाविति यथार्थमूहः । इदं केशवापनं शिखामारभ्या-

धस्तात्कार्यम् । एवं वापनं विधाय शुद्ध्यर्थं तूष्णीं स्नात्वा द्वादशाङ्गुलमपामार्गादिदन्तधावनकाष्ठम्,

आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च ।
ब्रह्मप्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥

इति मन्त्रेणाऽऽदाय—

मुखदुर्गन्धिनाशाय रदानां च विशुद्धये ।
ष्ठीवनाय च गात्राणां कुर्वेऽहं दन्तधावनम् ॥

इति मन्त्रेण दन्तान्संशोध्य द्वादश गण्डूषान्कृत्वाऽऽचम्य प्राणानायम्य देशकालस्मरणपूर्वकं हेमाद्र्याद्युक्तप्रकारेण स्नानसंकल्पं कुर्यात् । स यथा—अस्य श्रीमन्महाभगवतः सच्चिदानन्दरूपस्य श्रीमदादिनारायणस्याचिन्त्यापरिमितशक्त्या भ्रियमाणानां महाजलौघमध्ये परिभ्रममाणानामनेककोटिब्रह्माण्डानामेकतमेऽव्यक्तमहदहंकारपृथिव्यप्तेजोवाय्वाकाशाद्यावरणैरावृतेऽस्मिन्महति ब्रह्माण्डकटाहकरण्डे सकलजगदाधारशक्तिकूर्मवराहानन्तैरावतपुण्डरीकवामनकुमुदाञ्जनपुष्पदन्तसार्वभौमसुप्रतीकाष्टदिग्गजोपरिप्रतिष्ठितातलवितलसुतलतलातलरसातलमहातलपातालाख्यसप्तलोकोपरिभागे भूर्लोके भुवर्लोकस्वर्लोकमहर्लोकजनोलोकतपोलोकसत्यलोकाख्यलोकषट्कस्याधोभागे महाकालायमानफणिराजशेषसहस्रफणामण्डलाविधृते दिग्दन्तिशुण्डादण्डस्तम्भिते बहिरन्धतमसाऽऽवृतेनान्तःसूर्यप्रकाशितेन लोकालोकाचलेन वलयिते लवणेक्षुसुरासर्पिर्दधिक्षीरस्वादूदकाख्यसप्तार्णवपरिवेष्टिते जम्बुप्लक्षकुशक्रौञ्चशाल्मलशाकपुष्कराख्यसप्तद्वीपविराजिते स्वर्णप्रस्थचन्द्रकश्वेतावर्तरमणसिंहलमहारमणपारसीकपाञ्चजन्यलङ्काद्युपद्वीपैर्विराजित एवंविधसरोरुहाकारपञ्चाशत्कोटियोजनविस्तीर्णभूमण्डले तुहिनाचलहेमकूटनिषधनीलश्वेतशृङ्गिगन्धमादनपारियात्राख्याष्टसीमाचलैर्विभक्ते तन्मध्यवर्तिभारतकिंपुरुषहरिवर्षैलावृतरम्यकहिरण्मयकुरुभद्राश्वकेतुमालाख्यनववर्षशोभिते जम्बुद्वीपे नानावर्णकेसराचलशिखररत्नबीजाञ्चितभूसरोरुहकर्णिकायमानस्य मेरोर्दक्षिणदिग्भागे दक्षिणोदधिहिमाचलयोर्मध्यप्रदेशे नवसहस्रयोजनविभक्त इन्द्रद्वीपकशेरुताम्रपर्णीगभस्तिनागसौम्यगन्धर्ववारुणभारताख्यनवखण्डवरयस्मिन्भारते वर्षे दक्षिणोदधि-

१ ध. रा. °मेप्ररिमभन्त° । २ ग. °प्तादेन ।

प्रभृतिसहस्रयोजनवति भरतखण्डे स्वाम्यवन्तिकुरुक्षेत्रादिसमभूमध्यरेखाया अमुकदिग्भागेऽयोध्यामथुरामायाकाशीकाञ्च्यवन्तिद्वारवत्यादिमुक्तिक्षेत्रवत्यामस्यां कर्मभूमौ भागीरथीविन्ध्याचलगोदावरीणां दाक्षिणदिग्भागे कावेरीमलयाचलरामसेतूनामुत्तरदिग्भागे श्रीशैलहेमकूटकिष्किन्धागरुडाचलवेङ्कटाचलारुणागिरिहस्तिगिरिप्रभृतिपुण्यशैलवति दण्डकारण्ये नानापुण्यतीर्थवत्यस्मिन्देशविशेषेऽमुकतीर्थे श्रीमदनेककोटिब्रह्माण्डघटनायासरोमविवरस्य विराड्रूपिणो भगवतो महापुरुषस्य शेषपर्यङ्कशायिनः श्रीविष्णोराज्ञया प्रवर्तमानस्य तन्नाभिस्थानसरोरुहाद्दुत्पन्नस्य सकलवेदनिधेः सकलजगत्स्रष्टुः परार्धद्वयजीविनो ब्रह्मणः प्रथमपरार्धपञ्चाशत्यामतीतायां द्वितीयपरार्धे श्वेतवराहकल्पे प्रथमवर्षे प्रथममासे प्रथमपक्षे प्रथमदिवसेऽहनि उदयादित्रयोदशघटिकास्वतीतासु स्वायंभुवस्वारोचिषोत्तमतामसरैवतचाक्षुषाख्येषु षट्सु मनुषु व्यतीतेषूपरितनघटिकायां सप्तमे वैवस्वतमन्वन्तरे सप्तविंशतिमहायुगेषु गतेषु अष्टाविंशतितमे महायुगे पुरुहूतनामेन्द्रसमये कृतत्रेताद्वापरेषु गतेषु वर्तमाने कलियुगे प्रथमपादे बौद्धावतारे शालिवाहनशके सौरचान्द्रमाने प्रभवादिषष्टिसंवत्सरान्तर्गतप्रथमविंशत्यां वर्तमाने व्यावहारिके प्रमोदनामसंवत्सरे दक्षिणायने वर्षर्तौ भाद्रपदे मासे शुक्लपक्षे दशम्यां पुण्यतिथौ मन्दवासरे पूर्वाषाढानक्षत्र आयुष्मद्योगे तैतिलकरणे सिंहस्थे सूर्ये धनुस्थे चन्द्रे सिंहस्थे भौमे कन्यास्थे बुधे वृषभस्थे देवगुरौ तुलास्थे शुक्रे वृश्चिकस्थे शनैश्चरे कन्यास्थे राहौ मीनस्थे केतावेवंगुणविशिष्टपुण्यकालेऽमुकगोत्रस्यामुकनक्षत्रेऽमुकराशौ जातस्यामुकनामधेयस्य ममेह जन्मनि जन्मान्तरे च नानायोनिषु ज्ञानतोऽज्ञानतश्च बाल्यकौमारयौवनवार्धकेषु जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनोवाक्कायकर्मभिः कामक्रोधलोभमोहमदमात्सर्यैस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणवाक्पाणिपादपायूपस्थैः संभावितानां प्रकाशाकृतब्रह्महत्यासुरापानसुवर्णस्तेयगुरुतल्पगाख्यानां महापातकानां तत्संसर्गाद्यतिपातकानां रहस्यकृतब्रह्महत्यासुरापानसुवर्णस्तेयगुरुतल्पगाख्यानां महापातकानां तत्संसर्गित्वानुग्राहकत्वप्रयोजकत्वमित्रभावोपदेष्टृत्वानुमन्तृत्वप्रोत्साहकत्वादिमहापातकप्रतिदिष्टातिपातकानां गुर्वधिक्षेपवेदनिन्दासुहृद्वधाधीतनाशनादिब्रह्महत्यासमरूपपातकानामुरुर्पानृतमापणामक्ष्यभक्षणरजस्वलामुखास्वादनादिसुरापानसमपातकानामश्वरत्नमनुष्यहरणनिक्षेपहरणदेवब्राह्मणद्रव्यभूमिहरणधेनुहरणादिसुवर्णस्तेयसमरूपपातकानां पितृव्यसृमातृष्वसृमातु-

लभार्याज्येष्ठभ्रातृपत्नीमातुःसपत्नीपितृव्यपत्नीपितृव्यपत्नीभगिनीदुहितृ-
सखिभार्याकुमार्यज्ञातरूपन्तजस्त्रीस्नुषानुपपत्नीश्रोत्रियर्त्विगुपाध्याया-
चार्यमित्रपत्नीरजस्वलाशरणागताहीनवर्णासयोनिजासगोत्रास्त्रीगमना-
दिगुरुतल्पसमरूपपातकानां सोमयागस्थक्षत्रियवैश्यवधाविज्ञातगर्भारज-
स्वलात्रिगोत्रादीक्षितस्त्रीगुर्विणीवधादिमहापातकसमरूपपातकानामुत्क-
र्षणानृतभाषणकलञ्जादिनिषिद्धभक्षणरजस्वलासुरास्वादन(?)कूटसा-
क्ष्यसुहृद्वन्धनादिपरिवेदनभृतकाध्ययनाध्यापनपारदार्यपारिवित्त्यवार्धुष्य-
लवणविक्रयस्त्रीशूद्रविट्क्षत्रियवधनिन्दितार्थोपजीवननास्तिक्यव्रतलोप-
करणसुतविक्रयधान्यपशुस्तेयायाज्ययाजनपितृमातृसुतादित्यागतटाका-
रामविक्रयकन्यादूषणपरनिन्दकयाजनपरिवित्तिकन्याप्रदानकौटिल्यव्रत-
लोपात्मार्थक्रियारम्भमद्यपस्त्रीनिषेवणस्वाध्यायाग्निपरित्यागेन्धनार्थद्रुम-
च्छेदनस्त्रीहिंसनयन्त्रविधानव्यसनात्मविक्रयशूद्रद्रव्यहीनसख्यहीनयोनि-
निषेवणानाश्रमवासपरान्नपुष्टत्वसच्छास्त्राभिगमनाकराधिकारिताभार्या-
विक्रयाद्युपपातकानामजाविखरोष्ट्रमृगेभमीनाहिमहिषाश्ववधादिसंकरी-
करणानां क्रिमिकीटवयोवधमद्यानुगतद्रव्यभोजनफलेक्षुकुसुमस्तेयादिम-
लिनीकरणानां निन्दितधनधान्यकरीपजीवनासत्यभाषणशूद्रसेवाद्यपा-
त्रीकरणानां मद्यगन्धाघ्राणब्राह्मणपीडनसामान्यस्त्रीमैथुनादिजातिभ्रंश-
करणानां विहितकर्मत्यागनिषिद्धाचरणेन्द्रियानिग्रहपरमर्मोद्घाटनसूच-
कत्वाशौचस्नानसंध्यावन्दनजपहोमपञ्चमहायज्ञरहितभोजनदिवाद्विवार-
भोजनसस्यच्छेदनतरुगुल्मलतादिच्छेदनक्लैब्यस्त्रीवश्यश्वपतिक्लीबव्रात्यप-
रिवेत्तृपरिवित्तिशूद्रसेवकवार्धुषिकनिजकर्मविहीनान्नभोजनयत्यन्नभोज-
नयतिप्रेरितान्नयतिपक्वान्नयतिपात्रस्थान्नयतिस्पृष्टयतिदापितान्नभोजन-
शूद्रस्पृष्टशूद्रदृष्टशूद्रानुमतशूद्राधिकृतशूद्रयाचितान्नभोजनग्रहणभोजन-
ग्रहणकालपक्वान्नभोजनपर्वकालरात्रिभोजनानिवेदितान्नभोजनहस्तद-
त्तान्नहस्तपरिविष्टान्नादिभोजनप्रेतपिशाचोद्देश्यभोजनबलिदत्तान्ननीरा-
जितान्नभोजनवटाश्वत्थादिनिषिद्धपात्रभोजनग्रामयाजकदेवलकवृषली-
पतिमाहिषिकाशिवद्विजशाक्तपाषण्डपाशुपतचिह्निताङ्गचिकित्सकज्यौ-
तिषिकाशौचिपतितान्नभोजनभिन्नकांस्यपात्रभोजनताम्रालाबुदारुपापा-
णमृत्पात्रभोजनरजस्वलाचाण्डालादिवाक्यश्रवणभोजनदग्धपुरीषपूतिग-
न्धिमुक्तोच्छिष्टभोजनगणान्नदीक्षितान्नशूद्रपुरोहितान्नपर्यायान्नशूद्रपात्र-
स्थान्नभोजनमहापुरुषोद्दिष्टान्नभोजनानुचितान्नभोजनशूद्रभुक्तशेषान्नग्रा-

१ क स. °क्तवशो° ।

यनाध्यापनव्यवहारपक्षपातसाधारणब्राह्मणगृहसीमाकुल्यातटाककूपारा-माद्यपहरणपशुपक्षिबन्धनशीतवातातपवर्षचौराद्यापद्गततदुःखानिवारणान-र्हासिनशयनप्रदानविषमभाषणवाक्पारुष्यदण्डपारुष्याविहितकालेऽवि-हिताचरणमित्रस्वामिसुहृदाचार्येष्टभार्यादेवतावञ्चनपरमात्मस्मरणराहि-त्यादीनां प्रकीर्णकानां सकृत्कृतानामभ्यस्तानामत्यन्तचिरकालनिरन्तरा-भ्यस्तानां महापातकादीनां प्रकीर्णकान्तानां नवविधानां बहुविधानां सर्वेषां पापानामपनोदार्थमेतत्तीर्थस्नानादिकल्पोक्तफलावाप्त्यर्थं श्रीपरमे-श्वरप्रीत्यर्थं चास्मिन्नमुकतीर्थे स्नानमहं करिष्ये । एवं यथादेशं यथा-कालं यथाकामं देशकालोल्लेखनपूर्वकं संकल्पं कृत्वा दशविधस्नानानि कुर्यात् । तत्र भस्मगोमयमृत्तिकास्नानानि सर्वप्रायश्चित्तोक्तप्रकारेण कुर्यात् । यद्वा मा नस्तोक इति मन्त्रेण भस्मना प्रथमम् । गन्धद्वारा-मिति मन्त्रेण गोमयेन द्वितीयम् । स्योना पृथिवीति मृत्तिकया तृती-यम् । आपो हि ष्ठेति मन्त्रेणोदकेन चतुर्थम् । गायत्र्या गोमूत्रेण पञ्च-मम् । गन्धद्वारामिति गोमयेन षष्ठम् । आप्यायस्वेति क्षीरेण सप्तमम् । दधिक्राव्ण इति दध्नाऽष्टमम् । घृतं मिमिक्ष इति घृतेन नवमम् । देवस्य त्वेति कुशोदकेन दशमम् । अत्र कुशोदकेन स्नामीति मन्त्रशेषः[1] । ततः—

ॐ नमामि गङ्गे तव पादपङ्कजं सुरासुरैर्वन्दितदिव्यरूपम् ।
भुक्तिं च मुक्तिं च ददासि नित्यं भावानुसारेण सदा नराणाम् ॥

ॐ सागरस्वननिर्घोष दण्डहस्त सुरान्तक ।
जगत्स्रष्टर्जगन्मर्दिन्नमामि त्वां सुरेश्वर ॥
तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम ।
भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ॥

इत्युक्त्वा नाभिमात्रे जले नद्यां प्रवाहाभिमुखः स्थावरे तटाके च सूर्याभिमुखः स्थित्वा

ॐ नमो देवदेवाय शितिकण्ठाय दण्डिने ।
रुद्राय चापहस्ताय चक्रिणे वेधसे नमः ॥
सरस्वती च सावित्री वेदमाता गरीयसी ।
संनिधात्री भवत्यत्र तीर्थे पापप्रणाशिनी ॥
ॐ प्रपद्ये वरुणं देवमम्भसां पतिमूर्जितम् ।
याचितं देहि मे तीर्थं सर्वपापापनुत्तये ॥

---

१ ग. °के स्नामीति ।

ॐ हिरण्यशृङ्गं वरुणं प्रपद्ये तीर्थं मे देहि याचितः ।
यन्मया भुक्तमसाधूनां पापेभ्यश्च प्रतिग्रहः ॥
यन्मे मनसा वाचा कर्मणा वा दुष्कृतं कृतम् ।
तन्न इन्द्रो वरुणो बृहस्पतिः सविता च पुनन्तु पुनः पुनः ॥
नमोऽग्नयेऽप्सुमते नम इन्द्राय नमो वरुणाय नमो वारुण्यै नमोऽभ्यः ।
यदपां क्रूरं यदमेध्यं यदशान्तं तदपगच्छतात् ।
अत्याशनादतीपानाद्यच्च उग्रात्प्रतिग्रहात् ॥
तन्नो वरुणो राजा पाणिना ह्यवमर्शतु ।
सोऽहमपापो विरजो निर्मुक्तो मुक्तकिल्बिषः ॥
नाकस्य पृष्ठमारुह्य गच्छेद्ब्रह्मसलोकताम् ।
यश्चाप्सु वरुणः स पुनात्वघमर्षणः ॥

इति मन्त्रानुक्त्वा बद्धशिखां पुरतः कृत्वा त्रिवारमवगाह्य शरीरं प्रक्षाल्याऽऽपो हि ष्ठेति नवर्चसूक्तेन मार्जनं विधायाङ्गुष्ठमूलेन जलं प्रदक्षिणमालोडयेत् । तत्र मन्त्रः—इमं मे गङ्ग इत्यस्य मेधः(धाः)सिन्धुर्नद्यो जगती । जलालोडने वि० । ॐ इमं मे गङ्गे०मया । इत्यालोड्य याः प्रवत इत्यस्य वसिष्ठो नद्यो जगती० । तीर्थाभिमर्शने वि० । ॐ याः प्रवतो निवत०भवन्तु । इति तीर्थमभिमृश्य यथाशक्ति पवित्राल्लिङ्गमन्त्रान्पठित्वा तत्तत्तीर्थमाहात्म्योक्तमन्त्रैरर्घ्याणि दद्यात् । सामान्यार्घ्यदानमन्त्रास्तु—

नमः कमलनाभाय नमस्ते जलशायिने ।
नमस्तेऽस्तु हृषीकेश गृहाणार्घ्यं नमोऽस्तु ते ॥ १ ॥
एहि सूर्य सहस्रांशो तेजोराशे जगत्पते ।
अनुकम्पय मां भक्त्या गृहा० ॥ २ ॥
विष्णुपादाब्जसंभूते गङ्गे त्रिपथगामिनी(नि) ।
भागीरथीति विख्याते गृहा० ॥

[3]इत्यर्घ्याणि दत्त्वा, ऋतं चेत्यघमर्षणं कृत्वाऽऽचम्य, ॐ नमो नारायणायेत्यष्टाक्षरमन्त्रम्, ॐ द्रुपदादिवेन्मुमुचानः स्विन्नः स्नात्वी मलादिव । पूतं पवित्रेणेवाऽऽज्यमापः शुन्धन्तु मैनसः । ॐ तद्विष्णोः परम० ततम् । इति जपित्वा विष्णुं च स्मृत्वा केशवादिदामोदरान्तैर्द्वादशनामभिर्द्वादशकृत्व आप्लुत्य गायत्र्या शरीरे जलमभिषिच्य

१ ग. °वर्चेन सू° । २ ग. °धुनद्यो । ३ ग. °इत्याद्यर्घ्यां । ४ क. ख. °क्षरं म° ।

नन्दिनी नलिनी सीता मालती च महापगा ।
विष्णुपादाब्जसंभूता गङ्गा त्रिपथगामिनी ।
भागीरथी भोगवती जाह्नवी त्रिदशेश्वरी ॥
द्वादशैतानि नामानि यत्र यत्र जलाशये ।
स्नानयुक्तः सदा ब्रूयात्तत्र तत्र वसाम्यहम् ॥

इति गङ्गावाक्यं पठित्वा नाभिमात्रजले तिष्ठन्स्नानाङ्गतर्पणं कुर्यात् । तत्रेत्थम्—यज्ञोपवीती प्राङ्मुखः साक्षताभिरद्भिः, ब्रह्मादयो ये देवास्तान्देवांस्तर्पयामि । भूर्देवांस्तर्पयामि । भुवर्देवांस्तर्पयामि । स्वर्देवांस्तर्प० । भूर्भुवः स्वर्देवांस्तर्पयामीति पञ्चमन्त्रैरेकैकमञ्जलिं देवतीर्थेन दत्त्वा, उदङ्मुखो निवीती सयवाभिरद्भिः प्राजापत्यतीर्थेन कृष्णद्वैपायनादयो य ऋषयस्तानृषींस्तर्प० । भूर्ऋषींस्तर्प० । भुवर्ऋषींस्त० । स्वर्ऋषींस्तर्प० । भूर्भुवःस्वर्ऋषींस्तर्प० । इति पञ्चभिर्द्वौ द्वावञ्जली दत्त्वा दक्षिणामुखः प्राचीनावीती पितृतीर्थेन सतिलाभिरद्भिः सोमः पितृमान्यमोऽङ्गिरस्वानग्निष्वात्ता अग्निः कव्यवाहनादयो ये पितरस्तान्पितॄंस्तर्प० । भूः पितॄंस्तर्प० । भुवः पितॄंस्तर्प० । स्वः पितॄंस्त० । भूर्भुवःस्वः पितॄंस्तर्पयामीति त्रिस्त्रिस्तर्पयित्वा तीरमेत्य

अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम ।
भूमौ दत्तेन तोयेन तृप्ता यान्तु परां गतिम् ॥

इति मन्त्रेणाञ्जलिं तटे निक्षिप्य

ये केचास्मत्कुले जाता अपुत्रा गोत्रिणो मृताः ।
ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् ।

इति वस्त्रं तीरे निष्पीड्योपवीती

यन्मया दूषितं तोयं शारीरमलसंभवात् ।
तद्दोषपरिहारार्थं यक्ष्माणं तर्पयाम्यहम् ॥

इति यक्ष्मतर्पणं कृत्वा

ज्ञानतोऽज्ञानतो वाऽपि यन्मया दुष्कृतं कृतम् ।
तत्क्षमस्वाखिलं देवि जगन्मातर्नमोऽस्तु ते ॥

इति नदीं क्षमापयेत् । इति स्नानविधिः ।

अथ तर्पणम् । तच्च जले करणपक्ष आर्द्रवासा एव जानुमात्राधिकजले स्थित्वाऽऽचम्य प्राणानायम्य देशकालौ संकीर्त्य देवर्षिपितृतृप्ति[1]

[1] क. ग. °सा: क°।

द्वारा श्रीपरमेश्वरप्रीत्यर्थममुकतीर्थे देवर्षिपितृतर्पणं करिष्यमाणतीर्थश्राद्धाङ्गतर्पणं च तन्त्रेण करिष्य इति संकल्प्य देवर्षितर्पणं प्रजापतिस्तृप्यत्वित्यादि कृत्वा प्राचीनावीती दक्षिणामुखः सतिलजलेन नित्यतर्पणवत्पितृतर्पणं कृत्वा सर्वोद्देशेन तिलाञ्जलिं दद्यात्। तत्र मन्त्रः—

देवासुरास्तथा नागा यक्षगन्धर्वराक्षसाः।
पिशाचा गुह्यकाः सिद्धाः कूष्माण्डास्तरवः खगाः॥
जलेचरा भूनिलया वाय्वाधाराश्च जन्तवः।
तृप्तिमेतेन यान्त्वाशु मद्दत्तेनाम्बुनाऽखिलाः॥
नरकेषु समस्तेषु यातनासु च ये स्थिताः।
तेषामाप्यायनायैतद्दीयते सलिलं मया॥
ये बान्धवाबान्धवा वा येऽन्यजन्मनि बान्धवाः।
ते तृप्तिमखिला यान्तु ये चास्मत्तोऽभिकाङ्क्षिणः॥
यत्र क्वचनसंस्थानां क्षुत्तृष्णोपहतात्मनाम्।
इदमक्षय्यमेवास्तु मया दत्तं तिलोदकम्॥

आब्रह्मस्तम्बपर्यन्तं०अतीतकुलको०तिलोदकम्। इति मन्त्रैस्तर्पणं कुर्यात्। तीरे तर्पणपक्षे शुष्के वाससी परिधाय बर्हिरास्तीर्य तस्मिंस्तर्पयेदिति तर्पणविधिः।

अथ तीर्थश्राद्धप्रयोगः। देशकालोत्कीर्तनान्ते प्राचीनावीती पित्राद्यामान्तान्पितॄन्सकृन्महालयवदुच्चार्यैतेषां तृप्त्यर्थं तीर्थश्राद्धं सदैवं सपिण्डं पार्वणैकोद्दिष्टविधिनाऽन्नेन हविषा सद्यः करिष्य इति संकल्प्य क्षेत्रवासिनोऽन्यानपि च ब्राह्मणान्महालयवन्निमन्त्र्यार्घ्यावाहनविमाङ्गुष्ठनिवेशनतृप्तिप्रश्नविकिरविसर्जनवर्जं सकृन्महालयवत्प्रयोगः। महालयपक्षस्थाने तीर्थपदोच्चारणम्। इदं विष्णुरित्यादि विष्णो हव्यं रक्षस्वेत्यन्तस्यान्ननिवेदनैकदेशस्य लोपः। अत्र धूरिलोचनौ पुरूरवार्द्रवौ वा देवौ। पिण्डदाने आत्मपिण्डस्य पुरस्तादाब्रह्मणो ये पितृवंशजाता इत्यादिमन्त्रैः पिण्डान्तरदानं महालयवत्। पिण्डांस्तु तीर्थजल एव क्षिपेत्। इति तीर्थश्राद्धप्रयोगः।

अथ तीर्थश्राद्धानुकल्पाः। पाकाभावे आमश्राद्धं हिरण्यश्राद्धं वा कुर्यात्। तत्राप्यर्घ्यावाहनादीनां लोप एव। अत्राप्यशक्तौ पूर्वोक्तानुकल्पानामन्यतमेन कार्यम्। केवलैकपिण्डात्मकमप्युक्तमत्यशक्तं प्रति त्रिस्थलीसेतुसारे। तद्यथा—पूर्वोक्तपिण्डद्रव्याणां सक्तुनादीनामन्यतमेनैकं पिंडं कृत्वा संक्षेपतीर्थश्राद्धं करिष्य इति संकल्प्य

पिता पितामहश्चैव तथैव प्रपितामहः ।
मातामहस्तत्पिता च प्रमातामहकादयः ॥
तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठताम् ।

इति मन्त्रेणैकं पिण्डं दद्यादिति । तर्पणाशक्तौ तु आब्रह्मस्तम्बपर्यन्तमिति मन्त्रद्वयेनैव तर्पणम् । तीर्थश्राद्धानन्तरं यथाविभवं तीर्थपूजां कृत्वा तदुद्देशेन ब्राह्मणान्सुवासिनीश्च यथाशक्ति भोजयित्वा दीनानाथादीन्परितोष्य स्वयं सुहृद्युक्तः श्राद्धशेषं भुञ्जीत । तद्दिन उपवासपक्षे श्राद्धशेषमवजिघ्रेदिति । इति तीर्थप्राप्तिदिनकृत्यम् ।

द्वितीयादिदिने नित्यवत् स्नानतर्पणतीर्थपूजनब्राह्मणभोजनादि यथाशक्ति कुर्यात् । विशेषं तु तत्तीर्थमाहात्म्योक्तप्रकारेण कुर्यात् । एवं यात्रां कृत्वा प्रत्यागत्य शोभने मुहूर्ते गृहप्रवेशं कृत्वा पूर्वोक्तघृतश्राद्धवद्घृतश्राद्धं कुर्यात् । तत्र सर्वान्पितॄनुच्चार्यैतेषां तृप्त्यर्थममुकतीर्थात्प्रत्यागमननिमित्तं घृतश्राद्धं करिष्य इति संकल्पवाक्ये विशेषः । अन्यत्समानम् । केचिद्दधिश्राद्धं कार्यमित्याहुः । तत्पक्षे दधिश्राद्धं करिष्य इति संकल्पः । अत्र दध्नः प्राधान्यम् । अन्यत्तु व्यञ्जनत्वेन देयमिति । इति यात्रोत्तरश्राद्धम् ।

इति श्रीमच्चित्तपावनकेळकर० श्राद्धमञ्जर्यां सामान्यसर्वतीर्थोपयोगी तीर्थविधिः ।

---

अथ प्रयागयात्रायां विशेषः । प्रयागयात्रां करिष्य इति संकल्पः । आन्तरालिकतीर्थानां प्रासङ्गिकत्वान्नैव संकल्पोल्लेखः । मुण्डननिर्णयस्तूक्तः प्राक् । सभर्तृकाणां स्त्रीणां सर्वकेशसमुदायस्य द्व्यङ्गुलमात्रं छेदनमुक्तं तद्विधिर्ग्रन्थान्तरे । सभर्तृका स्त्री शरीरमलापकर्षणस्नानं कृत्वा भर्त्रनुज्ञां गृहीत्वा देशकालौ स्मृत्वा मम जन्मप्रभृत्यद्ययावन्मनोवाक्कायकर्मभिर्ज्ञानतोऽज्ञानतश्च संभावितानां महापातकादीनां प्रकीर्णकान्तानां नवविधानां बहुविधानां सर्वेषां पापानां रहस्यकृतानां प्रकाशकृतानां सकृत्कृतानामभ्यस्तानां च तथा साभिलापपरपुरुषनिरीक्षणसंभाषणसंभोगादिजनितपापानां रजस्वलावस्थाजनितसंपर्कादिपातकानां भर्तृमनोभङ्गाज्ञोल्लङ्घ्यादिविविधपातकानां चापनोदार्थमस्मिन्प्र-

---

१ ग. °ह्व । मातापितामहौश्चैव तथैव प्रपितामहौ । गा° । २ ग °त्पादिनः° ।

यागे गङ्गायमुनासरस्वतीत्रिवेणीसंगमे स्नानमहं करिष्ये । तत्राऽऽदौ भर्तुर्दीर्घायुरारोग्यतासिद्ध्यर्थमखण्डितसौभाग्यावाप्त्यर्थं च त्रिवेण्यां वेणी* प्रदानं करिष्य इति संकल्प्य गङ्गादिपूजां कृत्वा, अग्रतो द्व्यङ्गुलमात्रां वेणीं कर्त्यां कर्त्तितां कुङ्कुमादिचर्चितां रत्नसुवर्णाद्यलंकृतां वेणवपात्रे निधाय तत्पात्रमञ्जलौ गृहीत्वा भर्तारमवेक्षमाणा तं प्रार्थयेत् ।

अपराधसहस्राणि जातानि मम मोहतः ।
तत्सर्वं मे प्रसन्नेन मनसा क्षन्तुमर्हसि ॥
त्वत्प्रसादान्मया भोगाः सर्वे भुक्ताः सहस्रशः ।
आनीतोऽस्मिन्प्रयागाख्ये तीर्थे कामफलप्रदे ॥
गङ्गायमुनयोर्यत्र सरस्वत्याश्च संगमः ।
वेणीतिप्रथिता लोके भाग्यसौभाग्यवर्धिनी ॥
तत्र वेणीं प्रयच्छामि यद्याज्ञा स्वामिनो भवेत् ।

इत्युक्त्वा तथैव कुर्विति भर्तुराज्ञां गृहीत्वा

वेण्यां वेणीप्रदानेन सर्वं पापं प्रणश्यतु ।
जन्मान्तरेष्वपि सदा सौभाग्यं मम वर्धताम् ॥

इति मन्त्रेण त्रिवेणीसंगमे वेणीं निक्षिपेत् । भर्ता च—

सुमङ्गलीरियं वधूरिमां समेत पश्यत ।
सौभाग्यमस्यै दत्त्वायाथास्तं विपरेतन ॥

इति मन्त्रं पठेत् । इमं मन्त्रं विप्राः पठेयुरिति कौस्तुभे । ततः स्त्री स्नात्वा त्रिवेणीं पूजयित्वा तत्प्रीतये नानासौ१भाग्यद्रव्यवस्त्रकञ्चुकाभरणादियुतं वंशपात्रं दद्यात् । तत्र मन्त्रः—

वंशपात्रमिदं श्रेष्ठं वंशसौभाग्यवर्धनम् ।
दानानामुत्तमं दानमतः शान्तिं प्रयच्छ मे ॥

ततो वेणीदानपूर्णतासिद्ध्यर्थं ब्राह्मणान्दक्षिणया सुवासिनीः सौभाग्यद्रव्यकञ्चुक्यादिभिस्तोषयेत् । इति वेणीदानविधिः ।

अथ प्रत्यहं गङ्गाप्रार्थनामन्त्राः—

महापापादिपापं च नानायोनिषु यत्कृतम् ।
ज्ञानतोऽज्ञानतो वाऽपि द्रव्यलोभेन यत्कृतम् ॥

---

* ख. पुस्तके समासे—सिन्दूरं कुङ्कुमं चैव ताम्बूलं च सगुणकम् । कण्ठसूत्रं ताडपत्रं हरिद्रां चैव कञ्चुकीम् । सौभाग्यद्रव्ययुक्तानि दद्यात्पूर्णानि षोडश ।

---

१ ग. [illegible] । २ ग. [illegible] ।

परद्रोहादिकं पापं सर्वदा यन्मया कृतम् ।
भूतं भावि वर्तमानमार्द्रं शुष्कं च यत्कृतम् ॥
एते वै सर्वपापौघा नश्यन्तु मम जाह्नवि ।

अर्घ्यमन्त्रस्तु–ब्रह्मकमण्डलूद्भूते गङ्गे त्रिपथगामिनि ।
त्रैलोक्यवन्दिते देवि गृहाणार्घ्यं नमोऽस्तु ते ॥

यमुनाप्रार्थनामन्त्रः—
आदित्यदुहिते दे(तर्दे)वि यमज्येष्ठे यशस्विनि ।
त्रैलोक्यवन्दिते पुण्ये पापं मे यमुने हर ॥
गतं पापं गतं दुःखं गतो मे पापसंचयः ।
निष्पापो यमुने देवि प्रसादात्तव नान्यथा ॥

यमुनार्घ्यमन्त्रः–आदित्यदुहिते दे(तर्दे)वि यमज्येष्ठे यशस्विनि ।
त्रैलोक्यवन्दिते देवि गृहा० ॥

अत्र स्नानकाले नाभिमात्रजले तिष्ठन्यमं तर्पयामीत्यादिचतुर्दशमन्त्रैर्यमतर्पणं कुर्यादिति विशेषः । स्वरस्वतीप्रार्थनामन्त्रः—
गङ्गायमुनयोर्मध्ये स्थिताऽसि त्वं सरस्वति ।
उद्धारार्थं तु लोकानां मामुद्धर भवार्णवात् ॥

सरस्वत्यर्घ्यमन्त्रः—
गङ्गायमुनयोर्मध्ये या च गुप्ता सरस्वती ।
त्रैलोक्यवन्दिते देवि गृहा० ॥ इति ।

अथ प्रसङ्गादस्थिप्रक्षेपविधिः ।
यावदस्थि मनुष्याणां गङ्गातोये च तिष्ठति ।
तावत्स देही स्वर्गस्थः कुरुतेऽमृतभोजनम् ॥
नरकस्थो दिवं याति स्वर्गस्थो मोक्षमाप्नुयात् ।
अन्तर्दशाहे यस्यास्थि गङ्गातोये निमज्जति ॥
न तस्य पुनरावृत्तिर्ब्रह्मलोकात्कथंचन ।

इति पुराणोक्त्या गङ्गायामेवासौ विधिः । ब्रह्माण्डे तु तीर्थसामान्ये विहितः ।

ग्रन्थान्तरे—अस्तंगते गुरौ शुक्रे तथा मासे मलिम्लुचे ।
गङ्गायामस्थिनिक्षेपं न कुर्यादिति गौतमः ॥ इति ।

---

१ क ख °रार्थं तु । २ ग °त्रैतु नि° । ३ ग तार्पान्तेऽपि नि° ।

तथा—पुत्रो वाऽप्यथवा भ्राता सपिण्डः शिष्य एव वा ।
तीर्थप्रक्षेपणार्थाय अस्थिशुद्धिं समाचरेत् ॥
सुमुहूर्ते शुभे वारे सुलग्ने विष्टिवर्जिते ।
त्रिपादं ध्रुवनक्षत्रं धनिष्ठापञ्चकं तथा ॥
गुरुभौमार्कवारांश्च त्यक्त्वा बाह्य(ब्राह्म)र्क्षसंयुते ।
अस्थ्युद्धारं प्रकुर्वीत यथोक्तविधिना द्विजः ॥ इति ।

अथास्थिशुद्धिप्रयोगः । देशकालौ संकीर्त्यामुकगोत्रस्यामुकशर्मणोऽस्थ्नाममुकतीर्थे नयनाधिकारार्थमस्थिशुद्धिं करिष्य इति संकल्प्य सचैलं स्नात्वा यत्र तानि निखातानि भवेयुस्तां भुवं पञ्चगव्यैः प्रोक्षयेत् । तत्र मन्त्राः । गायत्र्या गोमूत्रेण । गन्धद्वारामिति गोमयेन । आप्यायस्वेति पयसा । दधिक्राव्ण इति दध्ना । शुक्रमसीत्याज्येन । देवस्य त्वा० हस्ताभ्यां प्रोक्षामीति कुशोदकेन । तत उपसर्पेति चतसृणां शङ्खः पितरस्त्रिष्टुप् । भूप्रार्थनखननमृदुद्धरणास्थिग्रहणेषु क्रमेण वि० । उपसर्प मातरमिति मन्त्रेण भूमिं प्रार्थ्य, उच्छ्वञ्चस्वेति खात्वा, उच्छ्वञ्चमानेति मृदमुद्धृत्य, उत्ते स्तभ्नामीत्यस्थिग्रहणं कृत्वा जलाशयमेत्य तानि प्रक्षाल्यास्थीनि स्पृष्ट्वा विधिना स्नायात् । ग्रन्थान्तरे त्वस्थीनि पुनः पुनः स्पृष्ट्वैवाष्टोत्तरशतवारं स्नायादित्युक्तम् । ततः स्पृष्ट्वैव पूर्वोक्तैः पञ्चगव्यमन्त्रैरस्थीनि पञ्चगव्यैः स्नापयेत् । तत एतोन्विन्द्रं स्तवामेति तृचेन शुद्धोदकेन प्रक्षाल्य सास्थिर्दशविधस्थानानि कुर्यात् । तत्र भस्मगोमयमृत्तिकास्नानानि यथोक्तविधिना कुर्यात् । अपि वा मा नस्तोक इति भस्मना गन्धद्वारामिति गोमयेन । स्योना पृथिवीति मृत्तिकया । ततः पञ्चगव्यमन्त्रैः पञ्चगव्यस्नानानि देवस्य त्वा० हस्ताभ्यां स्नामीति कुशोदकेन । आपो हि ष्ठेति तृचेन शुद्धोदकस्नानमिति । ततो वक्ष्यमाणमन्त्रैरस्थ्नां कुशैर्मार्जनं कुर्यात् । ते च मन्त्राः—अतो देवेति ऋक् । एतोन्विन्द्रमिति तृचम् । शुची वो हव्या इति तृचम् । अथ सूक्तानि । नतमंहो न० । इति वा इति मे म० । स्वादिष्ठया० वर्ग २ । ममाग्ने वर्चो० । कद्रुद्राय० । इति शौनकीयादौ । ग्रन्थान्तरेऽन्येऽपि मन्त्रा उक्ताः । ते च—यदन्ति यच्चेति द्वादशर्चं सूक्तम् । पवमानः सुवर्जन इत्यनुवाकः । इमा रुद्राय तवसे० वर्ग २ । आ ते पितर्मरुतां० वर्ग ३ । इमा रुद्राय स्थिरधन्वने० वर्ग १ । इति रुद्रसूक्तानि । तमु ष्टुहि यः० । आवो राजानं० । भुवनस्य

१ ग °स्त्रैष्टु° । २ ग °स्ताभ्यामिति ।

पितरं० । त्र्यम्बकं० । इति रुद्रमन्त्रा इति । ततोऽस्थीन्यष्टगन्धेन यक्षकर्दमेन चानुलेपयेत् । अष्टगन्धं तु—

चन्दनागरुकर्पूरकस्तूरीरोचनं तथा ।
उशीरं केशरं चैव देवदार्वित्यनुक्रमात् ॥

रोचनं गोरोचनम् । उशीरं वालकम् । यक्षकर्दमश्च—

कर्पूरमगरुश्चैव कस्तुरी चन्दनं तथा ।
कक्कोलं च भवेदेभिः पञ्चभिर्यक्षकर्दमः ॥ इति ।

ततो गृहे देवतागारे जलाशये वाऽस्थीनि संपूज्य धूपैरुद्धूप्य नीराज्योपहारादि निवेदयेत् ।

ततो हिरण्यश्राद्धं कुर्यात् । तद्यथा—देशकालौ स्मृत्वाऽस्मत्पितुरमुकशर्मणोऽमुकगोत्रस्यास्थ्युद्धारशुद्धिनिमित्तमस्मत्पितृपितामहप्रपितामहानाममुकशर्मणाममुकगोत्राणां वसुरुद्रादित्यस्वरूपाणां पार्वणेन विधिना हिरण्यश्राद्धं करिष्य इति संकल्प्य पूर्वोक्तहिरण्यश्राद्धविधिना श्राद्धं कुर्यात् । पुरूरवार्द्रवौ देवौ । अन्नेनाऽऽमान्नेन सक्तुभिर्वा पिण्डदानं श्राद्धान्ते तिलतर्पणं च कुर्यात् । अकृतसपिण्डीकरणस्य तु पूर्वोक्तप्रकारेणैकोद्दिष्टविधिना पित्रुद्देशेनैव श्राद्धं कुर्यादिति । तत आपो हि ष्ठेत्यादिभिरब्लिङ्गैर्मन्त्रैर्वारुणसूक्तैः पवमानसूक्तैः पुरुषसूक्तेन चास्थीनि मार्जयित्वा देशकालौ संकीर्त्यास्थिशुद्ध्यङ्गं हवनं करिष्य इति संकल्प्य स्थण्डिलेऽग्निं प्रतिष्ठाप्योदीरतामित्यष्टर्चेन सूक्तेनाष्टोत्तरशतं घृताक्ततिलाहुतीर्जुहुयात् । उदीरतां शङ्खः पितरस्त्रिष्टुप् । अस्थिशुद्ध्यङ्गहवने विनि० । तत्र त्रयोदशावृत्तिभिः प्रतिमन्त्रं हवनेन चतुरधिकशतमाहुतयो भवन्ति । अवशिष्टाश्चतस्र आहुतीरन्तिमेन मन्त्रेण मन्त्रावृत्त्या जुहुयात् । अपि वा सूक्तान्ते स्वाहाकारं कृत्वा सूक्तावृत्त्याऽष्टोत्तरशतमाहुतीर्जुहुयादिति । सर्वत्र पितृभ्य इदं न ममेति त्यागः । एवं होमं समाप्यास्थीनि ताम्रमये संपुटे निक्षिपेत् । उक्तं च—

सुवर्णं मौक्तिकं रौप्यं प्रवालं नीलकं तथा ।
एतानि पञ्च रत्नानि अस्थिमध्ये विनिक्षिपेत् ॥
कुशैरावृत्य सूत्रेण क्षौमेण परिवेष्टयेत् ।
अजिनं कम्बलं दर्भा गोकेशा भूर्जपत्रकम् ॥
शाणसूत्रं ताडपत्रं ताम्रपात्रं च वेष्टनम् । इति ।

---

१ ग. °ष्टीन्य ।

ग्रन्थान्तरे तु पट्टवस्त्रकौशेयमाञ्जिष्ठश्वेतवस्त्रनेपालशाणपट्टशुद्धमृ-द्भिश्च वेष्टनमुक्तम्।

एतन्मध्यस्थितास्थीनि न दुष्यन्त्यपवित्रकैः।
रजस्वलादिकाकादिस्पर्शेनोपहतानि वा॥
मार्गे वाहकदोषैश्च नोपहन्युः कदाचन। इति।

एवमुक्तप्रकारेण ताम्रसंपुटे प्रक्षिप्य तं वेष्टनास्थिगर्भं ताम्रसंपुटमादाय तीर्थं गच्छेत्। मार्गे विशेषः—

मार्गे संपुटमुत्तार्य शौचमाचमनं चरेत्।
स्नात्वा पाकादिकं कृत्वा भोजनादि समाचरेत्॥
देवान्पितॄन्समभ्यर्च्य गच्छेत्तीर्थं यथाविधि। इति।

काशीखण्डे च—

अस्पृष्टहीनजातिः सञ्शुचिष्मान्स्थण्डिलेशयः। इति।
अथ तीर्थं समासाद्य पार्वणं श्राद्धमाचरेत्।
पञ्चगव्यं समादाय वेष्टनान्यपहाय च।
क्षालयित्वा पञ्चगव्यैः प्रागुक्तैर्मन्त्रविस्तरैः॥
शुद्धवस्त्रे तीर्थजलैरस्थीनि क्षालयेत्पुनः।
अष्टोत्तरशतावृत्त्या मन्त्रैः केशवनामभिः॥
लेपयित्वा ततोऽस्थीनि गन्धैः पुष्पैः प्रपूजयेत्।
धूपैरुद्धूप्य नीराज्य नैवेद्यं घृतशर्कराम्॥
दत्त्वा हिरण्यवस्त्रादि गामेकां च पयस्विनीम्।
दक्षिणां स्वानुसारेण पुण्यलोकसमृद्धये॥

स्मृतिकौस्तुभादौ तु श्राद्धगोदानादेरनुक्तत्वाद्विकल्पः। देशकालौ [...]त्वा मम पित्रादेरमुकशर्मणोऽमुकगोत्रस्य समस्तपापक्षयपूर्वकब्रह्मलो[...]वाप्तये प्रयागे त्रिवेणीतीर्थेऽमुकतीर्थे वाऽस्थिप्रक्षेपमहं करिष्य इति [...]ल्प्य श्राद्धपक्षे पूर्ववद्धिरण्यश्राद्धमास्थिप्रक्षेपनिमित्तं कृत्वा यथा[...]क्ते हिरण्यादि विप्रेभ्यो दत्त्वाऽस्थीनि शुद्धवस्त्रे पलाशपत्रपुटे संस्थाप्य पञ्चगव्यैः क्षालयित्वा गन्धादिभिरभ्यर्च्य हिरण्यश[...]माल्यघृतमधुतिलैः सह मृत्पिण्डे निधाय दक्षिणां दिशमवेक्षमाणो [...]ऽस्तु धर्मराजायेति वदन्। तीर्थे प्रविश्य नाभिमात्रे जले स्थित्वाऽ-

१ ग °न्मयस्थि। २ ग गर्भताम्रसंपुटमादा°। ३ ग °गन्धपु°। ४ ग °क्षिणास्वानु°।

मुकशर्मणोऽमुकगोत्रस्यास्थीन्यस्मिन्नमुकतीर्थे प्रक्षिपामि स मे प्रीतो भवतु इत्युक्त्वा नम्रो भूत्वा द्वादशाक्षरेण मन्त्रेण जलेऽस्थीनि निक्षिप्योत्थाय भास्वन्तं सूर्यमवेक्ष्य तीरमागत्य ब्राह्मणाय यथाशक्ति रजतं दक्षिणां दद्यात् । अमुकगोत्रस्येत्याद्यन्ते कृतस्यास्थिप्रक्षेपस्य साङ्गतासिद्ध्यर्थमिदं रजतं चन्द्रदैवत्यं तुभ्यमहं संप्रददे । इति । दशाहाभ्यन्तरे तु संचयनानन्तरमेव पूर्वोक्तवेष्टनैरावेष्ट्य ताम्रपुटादौ निक्षिप्य तीर्थं गत्वा तत्र स्नानादिविधिना पूर्वोक्तप्रकारेण प्रक्षिपेदिति विशेषः । अस्थिप्रक्षेपे फलमुक्तं पुराणान्तरे—

एवमस्थीनि निक्षिप्य वंश्यस्य जनकस्य वा ।
पुत्रारोग्यधनैश्वर्ययुक्तो भवति नान्यथा ॥
दत्त्वा द्रव्यं वाहकाय पितॄणामनृणो भवेत् ॥ इति ।

स्मृतिकौस्तुभे तु पुराणवचनम्—

अस्थीनि मातापितृवंशजानि नयन्ति गङ्गामपि ये कदाचित् ।
सद्बान्धवस्यापि दयाभिभूतास्तेषां च तीर्थानि फलप्रदानि ॥ इति ।

इत्यस्थिप्रक्षेपविधिः ।

अथ प्रयागे वेण्यां देहत्यागेच्छायां देहत्यागविधिः । तत्र माघमासे देहत्यागान्मुक्तिः । तदुक्तं ब्राह्मे—

ध्यात्वा विष्णुपदाम्भोजं प्रयागे विष्णुतत्परः ।
तनुं त्यजति यो माघे तस्य मुक्तिर्न संशयः ॥ इति ।

कालान्तरे देहत्यागात्स्वर्गप्राप्तिरिति पद्मपुराणे । तत्र यथाशक्ति सर्वप्रायश्चित्तं कृत्वा स्वीयश्राद्धाधिकार्यभावे स्मृतिकौस्तुभादावुक्तप्रकारेण जीवच्छ्राद्धं सपिण्डनान्तं विधाय यथाशक्ति ब्राह्मणेभ्यो गवादिदानानि दत्त्वा दीनानाथांश्च परितोष्य कृतोपवासः परेऽह्नि ब्राह्मणानुज्ञां गृहीत्वा देशकालौ स्मृत्वा यथाकामं फलमुद्दिश्य मोक्षो मे भूयादितीच्छा चेन्ममानेकजन्मार्जिताशेषपापक्षयपूर्वकमोक्षप्राप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थमस्मिन्प्रयागे त्रिवेणीसंज्ञके गङ्गायमुनासरस्वतीसंगमे देहत्यागं करिष्य इति संकल्प्य विप्रादीन्नमस्कृत्य पुण्यस्तोत्राणि नानानं येत्यादिपुण्यसूक्तानि द्वादशाक्षरादिमन्त्रान्, इमं मे गङ्गे यमुने सरस्वति० सितासिते०इत्यादिमन्त्रांश्च पठित्वा मनोनिग्रहेण चित्तैकाग्र्यतया

१ ग वंशस्य ।

जीवपरमेश्वरयोरैक्यं भावयन्स्थूलसूक्ष्मकारणशरीरत्रयातीतो ब्रह्मैवाहं सच्चिदानन्दस्वरूपः सर्वान्तर्यामी प्रकाशरूपोऽस्मीति दृढं भावयन्परमेश्वरस्य महाविष्णोः सच्चिदानन्दस्वरूपस्य विराड्रूपस्य सर्वलोकहृदयाम्बुजमध्यगतस्य परमहंसस्य पादाम्बुजं ध्यायन्नारायणेति नामोच्चारयञ्जलं प्रविशेत्। एवं भावयितुमशक्तश्चेन्मन्त्रमात्रं जपेत्। उक्तं च वामनपुराणे मानसिकस्नाने—

अच्युतोऽहमनन्तोऽहं गोविन्दोऽहमहं हरिः।
आनन्दोऽहमशेषोऽहमजोऽहममृतोऽस्म्यहम्॥
नित्योऽहं निर्विकल्पोऽहं निर्विकारोऽहमव्ययः।
सच्चिदानन्दरूपोऽहं परिपूर्णोऽस्मि सर्वदा॥
ब्रह्मैवाहं न संसारी मुक्तोऽहमिति भावयेत्।
अशक्नुवन्भावयितुं वाक्यमेतत्सदाऽभ्यसेत्॥

ततस्तस्य पुत्रादिरौर्ध्वदेहिकं कुर्यादिति संक्षेपः।

इति वेण्यां देहत्यागविधिः।

तीर्थे पुण्यक्षेत्रे च प्रतिग्रहनिषेधः पाद्मे—

न तीर्थे प्रतिगृह्णीयात्प्राणैः कण्ठगतैरपि।
अपि कामातुरो जन्तुरेकां रक्षति मातरम्॥
तथैव सर्वदा विप्रस्त्यजेत्तीर्थे प्रतिग्रहम्।
तीर्थे प्रतिग्रहो यस्तु तीर्थविक्रय एव सः॥
विक्रीतायां तु गङ्गायां विक्रीतः स्याज्जनार्दनः।
जनार्दने तु विक्रीते विक्रीतं भुवनत्रयम्॥
यस्तु लौल्याद्द्विजः क्षेत्रे प्रतिग्रहरुचिर्भवेत्।
नैव तस्य परो लोको नायं लोको दुरात्मनः॥

ब्रह्मपुराणे—प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम्।
तत्र नारायणः स्वामी नान्यः स्वामी कदाचन॥
न तत्र प्रतिगृह्णीयात्प्राणैः कण्ठगतैरपि।

अत्र प्रवाहमिति जलावध्युपलक्षणम्। अत्र प्रसिद्धनदीषु गर्भे प्रतिग्रहनिषेधः। प्रसिद्धतरगण्डक्यादिनदीषु तीरेऽपि प्रतिग्रहनिषेधः। गङ्गायां तु क्षेत्रेऽपि। गर्भादिलक्षणमुक्तं दानधर्मे—

भाद्रशुक्लचतुर्दश्यां यावदाप्लवते जलम् ।
तावद्गर्भं विजानीयात्तदूर्ध्वं तीरमुच्यते ॥
सार्धं हस्तशतं यावद्गर्भतस्तीरमुच्यते ।
तीराद्गव्यूतिमात्रं तु परितः क्षेत्रमुच्यते ॥

गव्यूतिः क्रोशद्वयम् । गङ्गाक्षेत्रं तु योजनमात्रम् । एकयोजनविस्तीर्णं दिक्षु सीमा तटद्वयमिति भविष्यपुराणात् । अतिसंकटे प्रतिग्रहे निष्कृतिरुक्ता पाद्मे—

अथ चेत्प्रतिगृह्णीयाद्ब्राह्मणो वृत्तिकर्षितः ।
दशांशमर्जितं दद्यादेवं धर्मो न हीयते ॥ इति ।

अन्यत्र विस्तरः । प्रयागयात्रासमाप्तौ काशीयात्रां करिष्य इति संकल्पः । काश्यां गयायात्रां करिष्य इति संकल्पः । त्रिस्थलीयात्रां करिष्य इति सामान्यतः प्रयागादियात्राः करिष्य इति विशेषतो वा युगपत्संकल्पस्त्वेकप्रयोगविधेरभावान्न संघटत इति भट्टोजिदीक्षिताः । गयां गन्तुकामो घृतश्राद्धं कृत्वा यात्रासंकल्पं विधाय गणेशादीन्नत्वा श्राद्धशेषं घृतमादाय कार्पटीवेषं धृत्वा प्रस्थाय क्रोशादर्वाग्ग्रामान्तरं गत्वा श्राद्धशेषं भुक्त्वा तत्रैव वसेदिति विशेषः । तदुक्तं विष्णुपुराणे—

उद्यतस्तु गयां गन्तुं श्राद्धं कृत्वा विधानतः ।
विधाय कार्पटीवेषं कृत्वा ग्रामं प्रदक्षिणम् ॥
ततो ग्रामान्तरं गत्वा श्राद्धशेषस्य भोजनम् ।
ततः प्रतिदिनं गच्छेत्प्रतिग्रहविवर्जितः ॥ इति ।

कार्पटीवेषधारणं च गमनकाल एव न तु संध्याभोजनादाविति बहवः । सदैव वेषधारणमिति केचित् । गयाश्राद्धमाहात्म्यं त्रिस्थलीसेतौ—

आत्मजो ह्यन्यजो वाऽपि गयाकूपे यदा तदा ।
यन्नाम्ना पातयेत्पिण्डं तं नयेद्ब्रह्म शाश्वतम् ॥

अत एव कौर्मे—गयाभिगमनं कर्तुं यः शक्तोऽपि न गच्छति ।
शोचन्ति पितरस्तस्य वृथा चास्य परिश्रमः ॥ इति ।

तस्माद्गयाकृत्यं पुत्रस्य नित्यम् । अतो यथाशक्त्यप्यनुष्ठेयम् । तत्रापि सकृत्करणमेव नित्यम् । तावतैव शास्त्रार्थसिद्धेः । आवृत्तिबोधकवीप्साद्यभावाच्च । चातुर्मास्यवत्पुनः करणे तु फलाधिक्यमिति त्रिस्थलीसेतुसारे ।

---

१ ग. कर्पट[illegible] ।

महालये गयाश्राद्धे मातापित्रोर्मृतेऽहनि ।
कृतोद्वाहोऽपि कुर्वीत पिण्डनिर्वपणं सुतः ॥

अभिश्रवणनिषेधस्तु हेमाद्रौ—

वृद्धिश्राद्धे गयाश्राद्धे प्रीतिश्राद्धे तथैव च ।
सपिण्डीकरणश्राद्धे न जपेत्पितृसूक्तकम् ॥

वृद्धिश्राद्धे तु पितृसूक्तस्यैव निषेधः । तत्रान्यसूक्ताभिश्रवणविधानात् । संन्यासिना तु श्राद्धस्थलेषु दण्डस्य दर्शनमात्रं कार्यम् । न तु श्राद्धतर्पणादि । तदुक्तं वायवीये—

गयायां मुण्डपृष्ठे च कूपे यूपे वटे तथा ।
दण्डं प्रदर्शयेद्भिक्षुः पितृभिः सह मुच्यते ॥ इति ।

जीवत्पितृको यदि प्रसङ्गेन गयां गच्छेत्तदा पितुः पित्रादीनां श्राद्धं कुर्यात् । जीवत्पितृको मृतमातृकश्चेन्मातृश्राद्धार्थं गयां नाभिगच्छेत् । प्रसङ्गेन गतश्चेन्मातृश्राद्धं कार्यमेवेति त्रिस्थलीसेतौ । प्रयागादित्रिस्थलीयात्रानुष्ठानादिविशेषास्त्रिस्थलीसेतौ काशीखण्डादौ च ज्ञेयाः । गौरवभयान्नेहोच्यन्ते । अथ गोदावरीप्रार्थनामन्त्रः—

नमो गङ्गे महागङ्गे महादेवस्य वल्लभे ।
महति त्वां महादेवि गोदावरि नमोऽस्तु ते ॥

अर्घ्यदानमन्त्रास्तु—

ब्रह्माद्रिशिखरोत्पन्ने त्रिकण्टकविराजिते ।
गृहाणार्घ्यमिदं गङ्गे प्रसीद परमेश्वरि ॥ १ ॥
त्र्यम्बकस्य जटोद्भूते गौतमस्यापनाशिनि ।
गौतमप्रार्थिते देवि गृहाणार्घ्यं नमोऽस्तु ते ॥ २ ॥
सर्वपापौघशमनी(नि) सुरासुरनमस्कृते ।
सप्तधा सागरं यासि गृहाणा० ॥ ३ ॥

सिंहस्थे गुरौ सिंहराशिगतबृहस्पतिमहापर्वनिमित्तमिति संकल्पयापयोहः । कन्यागतबृहस्पतिमहापर्वनिमित्तमिति कन्यागते कृष्णायाम् । कृष्णाप्रार्थनामन्त्रः—

कृष्णे कृष्णाङ्गसंभूते जन्तूनां पापहारिणि ।
नमस्ते सरितां श्रेष्ठ महापापं विनाशय ॥
नमः कृष्णे महादेवि महादेवस्य वल्लभे ।
महति त्वां महाभागे कृष्णावेणि नमोऽस्तु ते ॥

अर्घ्यदानमन्त्राः—सह्याद्रिशिखरोत्पन्ने श्रीशैलोत्तुङ्गगामिनि ।
कृष्णावेणीति विख्याते गृहाणार्घ्यं० ॥ १ ॥
महाबलजटोद्भूते कृष्णे ह्युभयतोमुखी(खि) ।
वेदेन प्रार्थिते गङ्गे गृहाणार्घ्यं० ॥
दर्शनात्सर्वपापघ्नि स्पर्शनान्मोक्षदायिनि ।
स्नानेन मुक्तिदे पुण्ये गृहाणार्घ्यं० ॥ ३ ॥
मुण्डनं चोपवासश्च गौतम्यां सिंहगे गुरौ ।
कन्यागते तु कृष्णायां न तु तत्तीरवासिनाम् ॥

इत्यादयो विशेषा ग्रन्थान्तरतोऽनुसंधेयाः । सर्वत्रानुक्तौ गङ्गाप्रार्थनाघ्यदानमन्त्राश्चेति ।

अथ समुद्रयात्राविधिः । तत्स्नानकाल उक्तः स्कान्दे—
पुनाति पर्वणि स्नानात्तर्पणैः सरितां पतिः ।
कदाचिदपि नैवात्र स्नानं कुर्यादपर्वणि ॥
विना मन्त्रं विना पर्व क्षुरकर्म विना नरैः ।
कुशाग्रेणापि तीर्थेशो न स्प्रष्टव्यो महोदधिः ॥

भारतेऽपि—अश्वत्थसागरौ सेव्यौ न स्प्रष्टव्यौ कदाचन ।
अश्वत्थं मन्दवारे तु सागरं पर्वणि स्पृशेत् ॥ इति ।

पर्वाणि तु—चतुर्दश्यष्टमी कृष्णा अमावास्या च पूर्णिमा ।
पर्वाण्येतानि चत्वारि रविसंक्रमणं तथा ॥ इति ।

एतानि नित्यानि । नैमित्तिकानि तु ग्रहणादीनि । क्वचित्स्थलविशेषेऽपर्वण्यपि स्नानमुक्तं प्रभासखण्डे—
पर्वकाले च संप्राप्ते नदीनां च समागमे ।
सेतुबन्धे तथा सिन्धौ तीर्थेष्वन्येषु संयुतः ॥
एवमादिषु तीर्थेषु मेध्यो भवति वारिधिः ।
न कालनियमस्तत्र समुद्रे स्नानमाचरेत् ॥

देवतासमीपे सरःसरित्संगमेषु समुद्रस्नानं सदा कार्यमिति प्रायश्चित्तेन्दुशेखरे । तत्रापि—
भृगुभौमदिने स्नानं नित्यमेव विवर्जयेत् ।
[ *ग्रहणे रविवारे च पुत्रेप्सुर्नैतदाचरेत् ॥ ]

* इदमर्धं ग. पुस्तक एव ।

इति पुराणवचनाद्भौमशुक्रवासरयोः स्नानं निषिद्धम्। पर्वणि तु भृगुभौमादिनेऽपि स्नानं भवत्येवेति गम्यते। पर्वकाले च संप्राप्त इति पूर्वोक्तबलवत्तरवचनात्। परशुरामक्षेत्रे तु सर्वदैव स्नानादि कर्तव्यम्। अत्र नियामिका सह्याद्रिखण्डे परशुरामोक्तिः। सा च—

मत्क्षेत्रवासिभिः सर्वैर्नान्यैर्देशान्तरागतैः।
त्वं सेव्यः सर्वदा सिन्धो स्नानपानावगाहनैः॥
ये शापा ब्राह्मणैः पूर्वमस्पृश्याद्या महोदधे।
वृत्तास्ते न भविष्यन्ति चतुरशीतियोजने॥
येऽत्र वासं करिष्यन्ति वर्णाः संकरजादयः।
मुक्ता एव भविष्यन्ति मत्प्रसादान्न संशयः॥ इति।

समुद्रदर्शनादिमहिमोक्तः स्कन्दपुराणे सह्याद्रिखण्डे—

हन्त्यघं दर्शनादेव यद्द्विरात्रसंचितम्।
स्पृष्टस्त्रिरात्रजं सम्यक्किल्बिषं निर्दहेत्सदा॥
सप्ताहोरात्रजं हन्ति प्रोक्षणाद्भगवानघम्।
पानेन पक्षजं पापं स्नानात्पक्षद्वयस्य च॥
संगमे च तथाऽष्टम्यां पर्वस्नानाच्च वार्षिकम्।
भानावनुदिते नित्यं यः स्नाति लवणोदधौ॥
पूर्वोत्तरभवास्तेन पुरुषास्तर्पितास्त्रयः।
दिवसस्यान्तसमये यः स्नाति लवणोदधौ॥
कपिलायाः फलं तस्य दत्तायाः श्रोत्रिये ध्रुवम्।
व्यतीपाते दिनच्छिद्रे अयने विषुवे तथा॥
युगादौ तु नरः स्नात्वा विरजः स्यान्महोदधौ।

दिनच्छिद्रलक्षणमाह दानकमलाकरे—

भृगुः—दिनच्छिद्रं तु कथितं तिथिकृत्योर्घटीद्वयम्।
नागवेदपलोपेतं तद्वद्वै तत्त्वपलैर्युतम्॥
पलैः षोडशभिर्युक्तं नाडिकात्रितयं युतेः।
छेदादिसमयः प्रोक्तो दानेऽनन्तफलप्रदः॥ इति।

कृतिः करणम्। युतिर्योगः। तिथ्यादीनामादावन्ते चोक्तकालो दिनच्छिद्रमिति तत्रैव प्रपञ्चितम्।

---

१ क. ख. °द। तत्क्षेत्रवासिभिस्तु स°। २ ग. °वैरन्वै°।

सामुद्रेण च तोयेन यत्तु देवादितर्पणम् ।
क्रियते येन येषां च तेषां स्यादुत्तमा गतिः ॥
सामुद्रेण च तोयेन यत्र नाद्यं हृतं पयः ।
तत्र स्नात्वा च पीत्वा च ब्रह्महत्यां व्यपोहति ॥
आजन्मशतसाहस्रं यत्पापं समुपार्जितम् ।
भस्मी भवति तत्सर्वं क्षणात्स्नानान्महोदधौ ॥
भक्त्या यः कर्णमाधाय शृणुयाद्घोषमुत्तमम् ।
सामुद्रं पितरस्तस्य मोदन्ते सुचिरं दिवि ॥
दृष्ट्वा तदूर्मिसंघातं यस्तु तुष्येत्क्षमेन्नरः ।
यत्कासारोपसलिलं(!) चन्द्रलोकमवाप्नुयात् ॥ इति ।

दर्शनप्रकारस्तत्रैव—

आदौ दर्शनमन्विच्छन्गृह्णीयाच्छ्रीफलं मुदा ।
रत्नं पञ्चविधं पुष्पं ताम्बूलं च तदर्पयेत् ॥

अत्र श्रीफलशब्देन नारिकेरफलं गृह्यते । प्रार्थनादिमन्त्रांस्तु प्रयोगे वक्ष्यामः । अत्र मुण्डने विशेषः—

वृषभस्तत्र दातव्यः प्रवृत्ते क्षुरकर्मणि ।
प्रथमं स्नाति यः सिन्धौ तस्यायमुदितो विधिः ॥
ततः परं पूर्वविधिरब्धौ स्नाने प्रकीर्तितः ।

पूर्वविधिः क्षुरकर्म विनेत्यर्थः ।

पूर्वस्यां दिशि सुग्रीवं दक्षिणस्यां नलं स्मरेत् ।
प्रतीच्यां च स्मरेन्मैन्दमुदीच्यां शरभं स्मरेत् ॥
रामं च सीतया मध्ये लक्ष्मणं च विभीषणम् ।
अङ्गदं च हनूमन्तं स्मृत्वा स्नायान्महोदधौ ॥

अत्र तर्पणमुक्तं स्कान्दे—

पिप्पलादं विकर्णं च कृतान्तं जीवकेश्वरम् ।
मन्युं च कालरात्रिं च निद्रां चाहर्गणेश्वरम् ॥
वशिष्ठं वामदेवं च पराशरमुमापतिम् ।
वाल्मीकिनं नारदं च वालखिल्यांस्तथैव च ॥
नलं नीलं गवाक्षं च गवयं गन्धमादनम् ।
जाम्बवन्तं हनूमन्तं सुग्रीवं चाङ्गदं तथा ॥

---

१ ग. °दतु । था° । २ ग 'आरा' । ३ नारिकेल°

मैन्दं च द्विविदं चैव वृषभं शरभं तथा।
रामं च लक्ष्मणं चैव सीतां चैव यशस्विनीम्॥
एतांस्तु तर्पयेद्विद्वाञ्जलमध्ये विशेषतः॥ इति।
एताः सतर्प्य च तथा यमतर्पणमाचरेत्।
यमं च धर्मराजं च मृत्युं चैवान्तकं तथा॥
वैवस्वतं च कालं च सर्वभूतक्षयं तथा।
औदुम्बरं च दध्नं च नीलं च परमेष्ठिनम्॥
वृकोदरं च चित्रं च चित्रगुप्तं च तर्पयेत्॥ इति।

स्नानोत्तरं च पूजनमुक्तं सह्याद्रिखण्डे—

पश्चात्तु सागरं भक्त्या त्वावाहनपुरःसरम्।
पौरुषेणाथ सूक्तेन नाममन्त्रेण वा पुनः।
आसनं च तथा पाद्यमर्घ्यमाचमनं तथा॥
स्नानं वस्त्रं तथा यज्ञोपवीतं गन्धलेपनम्।
पुष्पैश्च विविधैर्नागचम्पकाद्यैः प्रपूजयेत्॥
धूपं दीपं च नैवेद्यं पक्वैश्च समन्वितम्।
ताम्बूलं दक्षिणादानं नीराजनमथो परम्॥
प्रदक्षिणा नमस्काराः कर्तव्या भक्तिभावतः।
मन्त्रैर्वेदोद्भवैर्देया पुष्पाञ्जलिरतन्द्रितः॥
ततस्तु ब्राह्मणान्सप्त पूजयेद्भक्तिसंयुतः।
तेभ्यश्च दक्षिणां दद्याद्यथाविभवसारतः॥
अन्येभ्यो दक्षिणां दद्याद्ब्राह्मणेभ्यश्च भूयसीम्।
कर्मणः साधुगुण्यार्थं दोग्ध्रीं धेनुं सवत्सकाम्॥
स्वर्णशृङ्गीं रौप्यखुरीमाचार्याय निवेदयेत्।
पितॄणां तु ततः कुर्याच्छ्राद्धं चैव यथाविधि॥
यथा श्राद्धं गयायां तु मोक्षदं सागरे तथा।
पितॄणां मोक्षकामोऽत्र श्राद्धं कुर्यात्प्रयत्नतः॥
यात्रायाः फलमन्विच्छन्ब्राह्मणान्भोजयेत्सुधीः।
दद्यात्सुवासिनीभ्यश्च कञ्चुकीकुङ्कुमादिकम्॥
तीर्थे प्राप्तस्तु यो विप्रो ब्रह्मणा सदृशः किल।
न परीक्षेद्गतो विप्रान्ब्राह्मणास्तीर्थदा यतः।
क्रोधलोभौ त्यजेदेवं विधिस्तीर्थस्य कीर्तितः॥ इति।

अयं विधिस्त्रिदिनसाध्यः । तदाह तत्रैव शौनकः—

प्राप्तेऽह्नि वपनं कुर्यादुपवासं च सागरम् ।
पूजयेत्परया प्रीत्या द्वितीये पितृतर्पणम् ॥
तृतीये तीर्थदेवानां तृप्तिदं कर्म वै चरेत् ॥ इति ।

तर्पणग्रहणं श्राद्धस्याप्युपलक्षणं ज्ञेयम् ।

अथ प्रयोगः । अत्रापि घृतश्राद्धादियात्राविधिः पूर्वोक्त एव । प्राप्तदिने यानादि परित्यज्य पादचारी हस्ते पञ्च रत्नानि ताम्बूलं पुष्पाणि नालिकेरफलं गुञ्जाक्षतादि गृहीत्वा सागरं दृष्ट्वा रत्नादि समर्प्य साष्टाङ्गं प्रणमेत् ।

सागरः सर्वतीर्थेशः सर्वदा हरिवल्लभः ।
सर्वं हरतु मे पापं तीर्थराज नमोऽस्तु ते ॥ १ ॥
नमस्ते विश्वगुप्ताय नमो विष्णो अपां पते ।
नमो जलधिरूपाय नदीनां पतये नमः ॥ २ ॥
नमस्ते जगदाधार शङ्खचक्रगदाधर ।
देव देहि ममानुज्ञां तव तीर्थनिषेवणे ॥ ३ ॥

ततो यथाशक्ति प्रायश्चित्तं वपनं दन्तधावनं च पूर्ववत्कृत्वा स्नानार्थं पूर्ववन्महासंकल्पं कुर्यात् । तदशक्तौ संक्षेपतः कुर्यात् । यथा । अस्य श्रीमन्महाभगवतः सच्चिदानन्दरूपस्य श्रीमदादिनारायणस्याचिन्त्यापरिमितशक्त्या ध्रियमाणानां महाजलौघमध्ये परिभ्रममाणानामनेककोटिब्रह्माण्डानामेकतमेऽस्मिन्ब्रह्माण्डकरण्डे भूर्लोके भूमण्डले जम्बुद्वीपे भारते वर्षे भरतखण्डे दण्डकारण्ये भूमध्यरेखायाः पश्चिमादिग्भागे गोदावर्या दक्षिणदिग्भागे कावेर्या उत्तरदिग्भागे सह्याद्रेः पश्चिमदिग्भागे पश्चिममहोदधेः पूर्वतीरेऽस्मिञ्श्रीपरशुरामनिर्मिते पुण्यक्षेत्रे लवणोदधिसंनिधौ श्रीमदनेककोटिब्रह्माण्डघटनायासरोमविवरस्य विराड्रूपिणो भगवतो महापुरुषस्य शेषपर्यङ्कशायिनः श्रीविष्णोराज्ञया प्रवर्तमानस्य ब्रह्मणो द्वितीयपरार्धे श्वेतवाराहकल्पे वैवस्वतमन्वन्तरेऽष्टाविंशतितमे महायुगेऽस्मिन्वर्तमाने कलियुगे तत्प्रथमचरणे बौद्धावतारे शालिवाहनशाके प्रमोदनामसंवत्सरे दक्षिणायने वर्षर्तौ भाद्रपदे मासि कृष्णपक्षेऽमावास्यायां पुण्यतिथौ भृगुवासरे उत्तराफल्गुनीनक्षत्रे शुक्ल-

१ क. रा. °वपरा° ।

योगे नागकरणे कन्यास्थे सूर्ये कन्यास्थे चन्द्रे सिंहस्थे भौमे तुलास्थे बुधे वृषभस्थे बृहस्पतौ तुलास्थे शुक्रे वृश्चिकस्थे शनैश्चरे कन्यास्थे राहौ मीनस्थे केतावेवंगुणविशिष्टे पुण्यकालेऽमुकगोत्रस्यामुकनक्षत्रेऽमुकराशौ जातस्यामुकनामधेयस्य ममेह जन्मनि जन्मान्तरे च नानायोनिषु ज्ञानतोऽज्ञानतश्च बाल्यकौमारयौवनवार्धकेषु जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनोवाक्कायकर्मभिः कामक्रोधलोभमोहमदमात्सर्यैस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणवाक्पाणिपादपायूपस्थैः संभावितानां प्रकाशकृतब्रह्महत्यादिमहापातकानां रहस्यकृतानां महापातकानां महापातकसमपातकानां तत्संसर्गित्वाद्यतिपातकानां गोवधाद्युपपातकानां पिपीलिकावधादिलघुपातकानां मृगवधादिसंकरीकरणानां कृमिकीटवधादिमलिनीकरणानां निन्दितधनधान्यजीवनाद्यपात्रीकरणानां ब्राह्मणपीडनान्यस्त्रीगमनादिजातिभ्रंशकरणानां विहितकर्मत्यागादिप्रकीर्णकानां च सकृत्कृतानामभ्यस्तानामत्यन्तचिरकालनिरन्तराभ्यस्तानां महापातकादीनां प्रकीर्णकान्तानां नवविधानां बहुविधानां सर्वेषां पापानामपनोदार्थं श्रीपरमेश्वरप्रीत्यर्थं समुद्रस्नानकल्पोक्तफलावाप्तयेऽस्मिन्क्षारमहोदधौ स्नानमहं करिष्य इति संकल्प्य तीरस्थपाषाणमाचाराद्वालुकापिण्डं च गृहीत्वा

पिप्पलादसमुत्पन्ने कृत्ये लोकभयंकरे।
पाषाणं ते मया दत्तमाहारार्थं प्रकल्प्यताम्॥

इति मन्त्रेण तं पाषाणं वालुकापिण्डसहितं कृत्यायै समुद्रे निक्षिपेत्। ततः पूर्वोक्तप्रकारेण दशविधस्नानानि कृत्वा बद्धाञ्जलिः समुद्राभिमुखस्तिष्ठन्प्रार्थयेत्।

त्वं राजा सर्वतीर्थानां त्वमेव जगतः पिता।
याचितं देहि मे तीर्थं सर्वपापैः प्रमुच्यते॥
ॐ सागरस्वननिर्घोष दण्डहस्तासुरान्तक।
जगत्स्रष्टर्जगन्मर्दिन्नमामि त्वां सुरेश्वर॥
तीक्ष्णदंष्ट्र महाकाय क० मर्हसि।
विश्वाची च घृताची च विश्वयोने विशांपते।
सांनिध्यं कुरु देवेश सागरे लवणाम्भसि॥
त्रितत्त्वात्मकमीशानं नमो विष्णुमुमापतिम्।
सांनिध्यं कुरु मे देव सागरे लवणाम्भसि॥

इत्युक्त्वा नाभिमात्रे जले स्थित्वा ॐ नमो देवदेवाय० प्रणाशिनी। प्रपद्ये वरुणं देव० ॐ हिरण्यशृङ्गं वरुणं प्रपद्ये० मर्षणः।

अग्निश्च योनिरनिलश्च देहो रेतोधा विष्णुरमृतस्य नाभिः।
एतद्ब्रुवन्पाण्डव सत्यवाक्यं ततोऽवगाहेत पतिं नदीनाम्॥

इति पठित्वा पूर्वस्यां दिशि सुग्रीवं दक्षिणस्यां नलं प्रतीच्यां मैन्दमुदीच्यां शरभं मध्ये श्रीरामं सीतां लक्ष्मणमङ्गदं विभीषणं हनूमन्तं च स्मृत्वा त्रिवारमवगाह्य मार्जनादि कृत्वा पवित्रमन्त्रान्पठित्वाऽर्घ्याणि दद्यात्। तत्र मन्त्राः—

सर्वरत्नो मयाऽश्रीमान्सर्वरत्नाकरो यतः।
सर्वरत्नप्रधान त्वं गृहाणार्घ्यं महोदधे॥ १॥
उद्यन्वन्सर्वतीर्थेश सर्वदा हरिवल्लभ।
इष्टं प्रकुरु भक्तानां गृहाणार्घ्यं नमोऽस्तु ते॥ २॥

नमः कमलनाभायेत्यादि पूर्ववत्। ततोऽघमर्षणादि पूर्ववत्स्नानविधिं कृत्वा नाभिमात्रे जले तिष्ठंस्तर्पणं कुर्यात्। तच्चेत्थम्। यज्ञोपवीती साक्षताभिरद्भिर्दैवतीर्थेन तर्पयेत्। पिप्पलादं तर्पयामि १ विकर्णं त० २ कृतान्तं त० ३ जीवकेश्वरं त० ४ मन्युं त० ५ कालरात्रिं त० ६ निद्रां त० ७ अहर्गणेश्वरं त० ८ वसिष्ठं त० ९ वामदेवं त० १० पराशरं त० ११ उमापतिं त० १२ वाल्मीकिनं त० १३ नारदं त० १४ वालखिल्यांस्त० १५ नलं त० १६ नीलं त० १७ गवाक्षं त० १८ गवयं त० १९ गन्धमादनं त० २० जाम्बवन्तं त० २१ हनूमन्तं त० २२ सुग्रीवं त० २३ अङ्गदं त० २४ मैन्दं त० २५ द्विविदं त० २६ वृषभं त० २७ शरभं त० २८ रामं त० २९ लक्ष्मणं त० ३० सीतां त० ३१ अथ यमतर्पणम्। यमं तर्पयामि १ धर्मराजं त० २ मृत्युं त० ३ अन्तकं त० ४ वैवस्वतं त० ५ कालं त० ६ सर्वभूतक्षयं त० ७ औदुम्बरं त० ८ दध्नं त० ९ नीलं त० १० परमेष्ठिनं त० ११ वृकोदरं त० १२ चित्रं त० १३ चित्रगुप्तं त० १४

आब्रह्मस्तम्बपर्यन्तं यत्किंचित्सचराचरम्।
मया दत्तेन तोयेन तृप्तिमेवाभिगच्छतु॥

इति तर्पयित्वा पूर्ववत्स्नानाङ्गतर्पणं यक्ष्मतर्पणान्तं कृत्वा

१ ग शरभं त०।

ज्ञानतोऽज्ञानतो वाऽपि यन्मया दुष्कृतं कृतम्।
तत्क्षमस्वाखिलं देव तीर्थराज नमोऽस्तु ते॥

इति क्षमाप्य पितॄंस्तर्पयित्वा पुरुषसूक्तेन नाममन्त्रेण वा सागरं षोडशोपचारैः संपूज्य समुद्रादूर्मिर्मधुमाँ उ० इत्यादिसमुद्रलिङ्गकैऋ(र्क्)-ङ्मन्त्रैः समुद्राय वयुनाय सिन्धूनां पतये नमः। नदीनाꣳ सर्वासां पित्रे जुहुता विश्वकर्मणे विश्वाहा मर्त्यꣳ हविः। इमꣳ समुद्रꣳ शतधारमुत्संव्य-च्यमानं भुवनस्य मध्ये। घृतं दुहानामदितिं जनायाग्ने मा हिꣳसीः परमे व्योमन्। इत्यादियजुर्मन्त्रैश्च पुष्पाञ्जलिं दद्यात्। अस्मिन्दिन उपवासं कुर्यात्। इति प्रथमदिनकृत्यम्।

अपरेद्युः स्नानादि कृत्वाऽपराह्णे पूर्वोक्ततीर्थश्राद्धविधिना श्राद्धं कुर्यात्। इति द्वितीयदिनकृत्यम्।

तृतीयदिने स्नानादि कृत्वा समुद्रप्रीतये यथाशक्ति जपहोमदानादि कृत्वा महापूजां च कृत्वा तीरे सप्त ब्राह्मणान्सप्तसागररूपान्ध्याय-न्नुपवेश्य ॐ लवणसागराय नमः १ ॐ इक्षुसागराय नमः २ ॐ सुरासागराय० ३ ॐ सर्पिःसागराय० ४ ॐ दधिसागराय० ५ ॐ क्षीरसागराय० ६ ॐ स्वादुसागराय० ७ इतिक्रमेणाऽऽसनाद्युपचारैर-भ्यर्च्य वस्त्रालंकारादिभिर्भूषयित्वा यथाशक्ति प्रत्येकमामान्नानि दक्षि-णात्वेन हिरण्यं च दद्यात्। तत्र आचार्यं संपूज्य तस्मै यात्रायाः संपू-र्णफलावाप्तये दोग्ध्रीं सवत्सां स्वर्णशृङ्गीं रौप्यखुरीमलंकृतां धेनुं दद्यात्। अशक्तौ तन्मूल्यं दत्त्वाऽन्येभ्यो ब्राह्मणेभ्यो भूयसीं दक्षिणां दत्त्वा यथा-शक्ति ब्राह्मणान्भोजयेदिति तृतीयदिनकृत्यम्।

आपत्तावेकस्मिन्नेव दिने सर्वं कुर्यात्। प्रत्यागत्य गृहप्रवेशे घृतश्राद्धं पूर्ववत्।

इति श्रीमच्चित्तपावनकेळक० श्राद्धमञ्जर्यां समुद्रयात्राविधिः।

---

अथ प्रकीर्णकतीर्थधर्माः—

तर्पणं पितृदेवानां श्राद्धदानं सदक्षिणम्।
तीर्थे तीर्थे च गोदानं नियतः प्राकृतो विधिः॥
विशिष्टख्यातलिङ्गेषु वृषदानं विधीयते।
स्नानं विलेपनं पूजां देवतानां समाचरेत्॥

---

१ ग [illegible]फलप्राप्त।

ब्राह्मणानां भूमिदानं देवपूजाकराय च ।
सर्वत्र देवयात्रायां विधिरेष प्रवर्तते ॥
न तीर्थे पातकं कुर्यात्त्यजेत्तीर्थोपजीवनम् ।
तीर्थे प्रतिग्रहस्त्याज्यस्त्याज्यो धर्मस्य विक्रयः ॥
श्रौतस्मार्तक्रियां कर्तुं यो न शक्नोति मानवः ।
तेन तीर्थानि सेव्यानि व्रतानि च तपांसि च ॥

यात्रार्थं गतस्य तु साधारण्येन तीर्थे दिनत्रयं वास आवश्यक ऊर्ध्वं स्वैच्छिकः ।

अम्बुमध्ये गवां गोष्ठे तीर्थेष्वपि च पर्वसु ।
राहोर्दर्शनकाले च सूतकं नैव विद्यते ॥

इदं शीघ्रमन्यत्र गमनसंभावनायां दानादिविषये द्रष्टव्यमिति संक्षेपः ।

अथैकस्मिन्दिनेऽनेकश्राद्धसंपाते निर्णयः । तत्र समानदेशकालकर्तृदेवताप्रधानाङ्गधर्मकाणां तन्त्रेणानुष्ठानम् । तन्त्रं यथा—अमुकश्राद्धानि तन्त्रेण करिष्य इति संकल्प्य सर्वमनुष्ठानं सकृदेव कुर्यादिति । निमित्तं विना न श्राद्धावृत्तिः ।

श्राद्धं कृत्वा तु तस्यैव पुनः श्राद्धं न तद्दिने ।
नैमित्तिकं तु कर्तव्यं निमित्तानुक्रमादयम् ॥

इति जाबालिवचनात् । अत एव हेमाद्रिणा—अमायुगमन्वादिसंक्रान्तिश्राद्धानि तन्त्रेण करिष्य इति संकल्पवाक्यमुक्तम् । एवं युगादिमन्वादिसंक्रान्तिकाम्यार्धोदयाद्यलभ्ययोगाष्टकाश्राद्धानां पिण्डरहितानां कालदेवतादिसमानजातीयानां विवाहाद्यनन्तरपिण्डरहितस्य दर्शश्राद्धस्य च तन्त्रेणानुष्ठानं कर्तव्यम् । एतेषामपि कालभेदेन प्रासौ नैव समासः । पिण्डसहितानां काम्याष्टकादर्शादीनां च तन्त्रमेवेत्येकः पक्षः । अपरस्तु दर्शयुगादिमन्वादिसंक्रान्त्यादिश्राद्धानां समानजातीयानां विजातीयानां वा प्रसङ्ग एवोचित इति । प्रसङ्गो नाम संकल्पादौ महातन्त्रवतः सपिण्डकस्य श्राद्धस्यैवोल्लेखः । न प्रसाङ्गिनः समानाल्पतन्त्रस्य पिण्डरहितस्य श्राद्धस्योल्लेखः । तस्य तत्रापि ध्यानमात्रं कर्तव्यम् । प्रसङ्गसिद्धिश्चोक्ता कालादर्शे—

नित्यदार्शिकयोश्चोदकुम्भमासिकयोरपि ।
दार्शिकस्य युगादेश्च दार्शिकालभ्ययोगयोः ॥

१ क. ग. एवापि । २ क. ग. °श्राभिध्या° ।

दार्शिकस्य तु मन्वादेः संपाते श्राद्धकर्मणः ।
प्रसङ्गादितरस्यापि सिद्धेरुत्तरमाचरेत् ॥ इति ।

इतरस्याल्पतन्त्रस्यापि सिद्धेरुत्तरं महातन्त्रमाचरेदित्यर्थः । माधवीये—काम्यतन्त्रेण नित्यस्य तन्त्रं श्राद्धस्य सिध्यतीति । देवताभेदे तु नैव प्रसङ्गसिद्धिर्नापि तन्त्रम् । तदुक्तं तत्रैव—

नित्यस्य चोदकुम्भस्य नित्यमासिकयोरपि ।
नित्यस्य चाऽऽब्दिकस्यापि दार्शिकाब्दिकयोरपि ॥
युगाद्याब्दिकयोश्चापि मन्वाद्याब्दिकयोरपि ।
प्रत्याब्दिकेषु चालभ्ययोगेषु विहितस्य च ॥
संपाते देवताभेदाच्छ्राद्धयुग्मं समाचरेत् ।
निमित्तानियतिश्चात्र पूर्वानुष्ठानकारणम् ॥ इति ।

श्राद्धसंपाते पाकस्य भेद एव । अशक्तौ केवलौदनमात्रभेदो वा । गृहदाहादिना युगपन्मरणे त्वेक एव पाकः । तदाह सिन्धौ भृगुः—

एककाले गतासूनां बहूनामथवा द्वयोः ।
तन्त्रेण श्रपणं कृत्वा कुर्याच्छ्राद्धं पृथक्पृथक् ॥ इति ।

अत्रापि मरणक्रमेण श्राद्धानि कर्तव्यानि । तदज्ञाने संबन्धक्रमेण । यद्येकः कर्ता द्वयोः पृथक्श्राद्धं कुर्यात्तदा पूर्वमृतस्याऽऽदौ कृत्वा स्नात्वा ततः पश्चान्मृतस्य पृथक्पाकेन कुर्यादिति कमलाकरः । एकस्मिन्दिने त्रयाणां श्राद्धं नैव कुर्यात् । तदाह सिन्धावाश्वलायनः—

नैकस्मिन्दिवसे श्राद्धं त्रयाणां कुत्रचिद्द्विजः ।
एकः कुर्यात्तथा प्राप्ते अन्यो भ्राता समाचरेत् ॥
भ्रातर्यविद्यमाने तु तत्परेऽह्नि समाचरेत् ।
अन्यथा श्राद्धहन्ता स्याच्छ्राद्धं संकरकृद्भवेत् ॥ इति ।

एकस्यां तिथौ मातापित्रोर्मरणे पूर्वं पितुः प्रत्याब्दिकं कृत्वा पश्चान्मातुरिति चन्द्रिकायाम् । हेमाद्रिमते मरणक्रमेणैव । वर्गद्वयस्य दर्शवत्तन्त्रेण श्राद्धं कुर्यादिति कमलाकरः । पौर्वापर्याज्ञाने तु पितृपूर्वं कुर्यादिति हेमाद्रिः । सहगमने तु तिथ्येकत्वे तन्त्रेण प्रत्याब्दिकश्राद्धम् । तिथिभेदे तत्तत्तिथौ तत्तच्छ्राद्धमिति केचित् । अन्ये तु तस्याः पतिमरणेन मृतप्रायत्वात्तिथ्यन्तरे सहगमनेऽपि भर्तृतिथावेव तन्त्रेण श्राद्धमित्याहुः । अनेकनिमित्तप्राप्तौ निमित्तक्रमेण श्राद्धानि कर्तव्यानि । यथा

१ ग °कर्मे° । २ क ख. °स्पृष्टस° । ३ ग °मित्त पुर्व° ।

दर्शे चेत्पितृक्षयाहस्तदा क्षयाहमयुक्तं श्राद्धं कृत्वा दार्शं कार्यम्। तदपि समाप्य ग्रहणं चेत्तन्निमित्तकमपि कृत्वा पुत्रजन्म यदि स्यात्तन्निमित्तकमपि कुर्वीत। एवं दर्शे प्रत्याब्दिकमहालयप्रसक्तावपि तथैव। तत्राऽऽदौ मध्याह्न एव सांवत्सरिकारम्भं कृत्वा ब्राह्मणविस्तारवर्जं महालयं कृत्वा पिण्डपितृयज्ञं कृत्वा सांकल्पविधिना दर्शश्राद्धं कुर्यात्। अन्यथाऽपराह्ने कर्मचतुष्टयासंभवात्। सति संभवे यथोक्तं कर्तव्यम्। एवमन्यत्रापि द्रष्टव्यम्। पित्राऽपि बहूनामेकस्यां तिथौ मरणे संबन्धक्रमेण मरणक्रमेण वा पृथक्पृथक्श्राद्धानि कर्तव्यानि। पार्वणैकोद्दिष्टयोर्युगपत्प्रसक्तौ पूर्वमेकोद्दिष्टं कृत्वा पश्चात्पार्वणं कुर्यात्। तीर्थश्राद्धे यत्र काश्यादावेकस्मिन्महातीर्थेऽनेकान्यन्तरतीर्थान्येकदिने गम्यन्ते तदैकस्मिन्नपि दिने तत्तत्तीर्थप्राप्तिनिमित्तकानि बहूनि श्राद्धानि निमित्तक्रमेण कार्याणि। उपवासमुण्डने तु सकृदेव। यत्र तु व्याप्यतीर्थावच्छेदेन श्राद्धकरणाद्व्यापकतीर्थश्राद्धमपि सिध्यति तत्र प्रतिनिमित्तं नाऽऽवृत्तिः। किं तु तन्त्रेणैव श्राद्धानां सिद्धिः। यथा—गङ्गावेणीप्रयागनिमित्तकानां गङ्गाकाशीमणिकर्णिकानिमित्तकानां चेत्यादि। तत्र काशीनिमित्तकं मणिकर्णिकानिमित्तकं च श्राद्धं तन्त्रेण करिष्य इति संकल्प्यैकमेव श्राद्धं कुर्यात्। यदा तु प्रत्यासन्नप्राक्काले गङ्गायामकृतश्राद्धस्तदा गङ्गाश्राद्धं चेत्यपि वदेत्। एवं प्रयागगयादावपि द्रष्टव्यम्। यदा त्वन्योद्देशेन तीर्थं याति तदा तत्पित्रादीनुद्दिश्याऽऽदौ श्राद्धं कृत्वा पश्चात्स्वपित्रुद्देश्यकं कुर्यादिति। श्राद्धसंपाते यादृशः श्राद्धानां प्रसङ्गस्तन्त्रं वा तेषां तर्पणेऽपि तथैव तन्त्रप्रसङ्गौ। श्राद्धावृत्तौ तु तर्पणस्याप्यावृत्तिरुक्तप्रकारेणाऽऽद्यन्ते वेति दिक्।

इति श्रीमच्चित्तपावनकेळक०श्राद्धमञ्जर्यां श्राद्धसंपाते निर्णयः।

---

अथ श्राद्धविघ्ने निर्णयः। तत्र श्राद्धारम्भात्पूर्वमाशौचप्राप्तौ प्रत्याब्दिकमाशौचान्ते कर्तव्यम्। मासिकं तूत्तरेण सह। दर्शश्राद्धादीनां लोप एव। तत्राप्याशौचान्ते श्राद्धलोपप्रायश्चित्तार्थमुपवास इति कमलाकरः। श्राद्धारम्भोत्तरं कर्तुराशौचप्राप्तौ प्रारब्धं श्राद्धं समापनीयमेव। कर्मसमाप्तिपर्यन्तं कर्तुर्नाऽऽशौचम्। श्राद्धारम्भस्तु पाकारम्भ इत्येके। पाकसिद्धिरित्यन्ये। पाकप्रोक्षणमिति केचित्। विप्रनिमन्त्रण-

---

१ ग 'इदेन'।

मित्यपरे । अत्राऽऽचाराद्यवस्था । भोक्तुर्दोषोऽस्त्येवेति कमलाकरः । आशौचिनां गृहे श्राद्धभोजने यावत्कर्तुराशौचं तावद्भोक्तुराशौचम् । आशौचान्ते भोक्त्रा सांतपनं प्रायश्चित्तं कार्यमिति मार्कण्डेयः । मासमेकं व्रती भवेदिति शङ्खः । अज्ञानात्त्वेकरात्रमुपोष्य पञ्चगव्यं पिबेदिति च्छागलेयः । सर्वत्राभ्यासे द्विगुणमिति माधवीयादौ । विप्रस्य त्वाशौचप्राप्तौ निमन्त्रणोत्तरमाशौचाभाव इति कमलाकरः । इदमामश्राद्धपरमिति शुद्धिविवेकः । आसनदानोत्तरमाशौचाभाव इत्यन्ये । आवाहनोत्तरमित्यपरे । इदमेव युक्तमिति प्रतिभाति । देहे पितृषु तिष्ठत्सु नाऽऽशौचं विद्यते क्वचिदिति ब्राह्मोक्तेः । अस्मिन्पक्ष आसनावाहनोत्तरं भोक्तुराशौचप्राप्तौ विसर्जनपर्यन्तं नाऽऽशौचम् । आसनात्पूर्वमाशौचप्राप्तौ तत्स्थानेऽन्यं विप्रं निमन्त्र्य भोजयेत् । विप्रस्य भोजनसमये दातुर्गृहे तद्बान्धवादिमरणादौ शेषमुच्छिष्टमन्नं त्यक्त्वा परकीयशुद्धजलेनाऽऽचामेदिति हेमाद्रिः । केचित्प्रारब्धे श्राद्धे नाऽऽशौचमित्याहुस्तच्चिन्त्यम् ।

अथ कर्तुर्भार्यारजोदर्शने । तत्र दार्शिकयुगादिमन्वादिसंक्रान्तिवैधृतिव्यतीपाताद्यावश्यकानि आमेन कार्याणि । शुद्धपत्न्यन्तरसत्त्वेऽन्नेनैव । पञ्चमेऽहनि कार्याणीति कालादर्शे । तन्न युक्तमिति चन्द्रिकाकारः । पित्रोराब्दिकं तु तद्दिन एवान्नेन सपिण्डकं कार्यम् । मासिकेऽप्येवमेव । केचिद्भार्यान्तरसत्त्वे तद्दिन एव । एकभार्यस्तु पञ्चमेऽहनि कुर्यादित्याहुः । इदं कमलाकरादीनां नाभिमतम् । तन्मत एकभार्योऽपि तद्दिन एव कुर्यादिति । महालयश्राद्धानि पत्न्यां रजस्वलायां सत्यामप्यन्नेनैव कार्याणि । सकृन्महालयश्राद्धं तु स्नातायां पूर्वोक्तकालान्तरे कार्यम् । अष्टकाश्राद्धान्यारब्धानि चेदन्नेनैव । केचिन्मत उक्तान्यतममासे सकृत्कार्याणि । काम्यानां लोप एव । नैमित्तिकान्यावश्यकानि त्वामेन कार्याणि । अनावश्यकानां लोपः । अपुत्रकस्य स्त्री श्राद्धकर्त्री सा यदि रजस्वला चेत्तदाऽऽब्दिकं पञ्चमेऽहनि कुर्यात् । मासिकं तूत्तरेण सह । सकृन्महालयश्राद्धं पूर्वोक्तकालान्तरे । दर्शादीनां लोप एवेत्यन्यत्र विस्तर इति दिक् ।

इति श्रीमच्चित्पावनकेळकरोपाभिधमहादेवात्मजबापूभट्टविरचितायां श्राद्धमञ्जर्यां श्राद्धविघ्ने निर्णयः ।

---

अथ श्राद्धभोजन आमान्नादिश्राद्धीयद्रव्यप्रतिग्रहे च प्रायश्चित्तानि। तत्रान्तर्दशाहे यानि श्राद्धानि तानि नवश्राद्धसंज्ञानि। तत्राऽऽपदि कायम्। अनापदि चान्द्रायणम्। अनापदि नवश्राद्धेषु कामतो भुक्तवतो विप्रस्य संवत्सरपर्यन्तं भोजनात्प्राकूसंहिताध्ययनमिति प्रायश्चित्तेन्दुशेखरे। एकादशाहे महैकोद्दिष्टे चान्द्रायणम्। अनापदि चान्द्रं कार्यं च। प्रायश्चित्तान्ते पुनः संस्कार इति हेमाद्रिः। द्वादशाह आद्यमासिक ऊनमासिके च पादोनकायम्। अनापदि कायं पराकश्च। द्विमासिके त्रैपक्षिक ऊनषाण्मासिक ऊनाब्दे चार्धं प्राजापत्यम्। अनापदि पादोनम्। अतिकृच्छ्रो वा। त्रिमासादिसंवत्सरविमोक्षान्तेषु सपिण्डीकरणश्राद्धे चोपवासः। अनापदि कृच्छ्रः पादकृच्छ्रो वा। त्रिरात्रमुपवासः कृच्छ्रार्धं वा। प्राजापत्यमेव कृच्छ्रः। प्रथमाब्दिके द्वितीयाब्दिके तृतीयाब्दिके च पादोनकायम्। अनापदि चान्द्रम्। एषु श्राद्धेषु भोजने दोष उक्तः काशिकायाम्—

मृतेऽहनि तु संप्राप्ते यावदब्दचतुष्टयम्।
बहिः श्राद्धं प्रकुर्वीत न कुर्याच्छ्राद्धभोजनम्॥
प्रथमेऽस्थीनि मज्जा च द्वितीये मांसभक्षणम्।
तृतीये रुधिरं प्रोक्तं श्राद्धं शुद्धं चतुर्थकम्॥ इति।

स्मृत्यन्तरे च—

सप्तत्रिंशच्च यो मासाञ्श्राद्धे भुङ्क्ते तु मोहतः।
स पङ्क्तिदूषितः पापी प्रेताशी च भवेत्तु सः॥ इति।

चतुर्थाब्दिकादौ षट् प्राणायामाः। नक्तं वा। दर्शे षट् प्राणायामाः। अनुक्तौ पार्वणश्राद्धे दर्शातिदेशात्षट् प्राणायामाः। सर्वेषु श्राद्धेषु दशकृत्वो गायत्र्याऽभिमन्त्रिता अपः पीत्वा संध्योपासनहोमादि यन्नित्यकर्म तत्कुर्यादिति प्रागेवोक्तम्। एतदनुक्तप्रायश्चित्तश्राद्धपरमिति विज्ञानेश्वरः। काम्यनैमित्तिकश्राद्धेषु दोषाल्पत्वे दर्शवत्षट् प्राणायामाः। यस्मिञ्श्राद्धे भोक्तुर्दोषबाहुल्यं तत्र प्रायश्चित्तमपि तदनुसारेण कल्पनीयम्। उदाहरणं यथा निर्णयसिन्धावापस्तम्बः—

सूतके मृतके भुङ्क्ते गृहीते शशिभास्करे।
छायायां हस्तिनश्चैव न भूयः पुरुषो भवेत्॥ इति।

---

१ ग. एतेषु। १ क ग. 'त्रिंशन्नित स'।

तत्र चान्द्रायणादि प्रायश्चित्तं कल्पनीयमिति । सर्वत्र मिताक्षरादावुक्तप्रकारेण यथोक्तं प्रायश्चित्तमाचरणीयम् । तदशक्तौ प्रायश्चित्तमतिनिधिं कुर्यात् । तत्र प्राजापत्यप्रत्याम्नायास्तु पयस्विनीधेनुदानम् । तदशक्तौ गोदानम् । तदभावे तन्मूल्यम् । धेनुमूल्यं गोरपेक्षया पञ्चगुणम् । अयुतगायत्रीजपः । गायत्र्या व्याहृतिभिर्वा सहस्रतिलहोमः । गायत्र्या शतद्वयं घृताहुतयः । संहितापारायणम् । प्राणायामशतद्वयम् । द्वादशविप्रभोजनम् । तीर्थोद्देशेन योजनगमनम् । रुद्रैकादशिनीजपः । शिरःशोषणपूर्वकद्वादश साङ्गानि स्नानानि । समुद्रगनदीस्नानम् । एतेषां प्राजापत्यप्रत्याम्नायानामन्यतमेन यथाधिकारं यथाशक्त्या(क्ति) प्रायश्चित्तमाचरणीयम् । कायें पयस्विनीधेनुदानं प्रत्याम्नायः । अशक्तौ प्राजापत्यत्रयम् । पराके द्वे पञ्च तिस्रो वा धेनवः । अशक्तौ तन्मूल्यं वा । उपवासे पञ्चगुञ्जापरिमितरौप्यदानम् । अतिकृच्छ्रे धेनुद्वयम् । नक्तव्रते गुञ्जाद्वयपरिमितरौप्यदानं प्रतिनिधिरिति । पतितचाण्डालदुर्मरणादिमृतानां श्राद्धेषु द्विगुणं प्रायश्चित्तम् । गुरुद्रव्यार्थं श्राद्धभोजने प्रायश्चित्तार्धम् । जपशीलस्य निस्पृहस्य च तदर्धम् । क्षत्रियादिश्राद्धेषु द्वित्रिचतुर्गुणानि प्रायश्चितानि ज्ञेयानि । सर्वत्राभ्यासे द्विगुणं प्रायश्चित्तम् । आमहेमसंकल्पश्राद्धेषु तत्तदर्धानि प्रायश्चित्तानि । वृद्धौ प्राणायामत्रयं कृच्छ्रार्धं वा । सीमन्तनामकरणजातकर्मचूडाकर्माङ्गवृद्धिश्राद्धे सांतपनम् । सांतपने धेनुद्वयदानं प्रत्याम्नायः । अनापदि चान्द्रम् । अन्यसंस्काराङ्गश्राद्धेषूपवासः । अनापदि त्रिरात्रमुपवासः । यतिर्व्रती ब्रह्मचारी चोक्तप्रायश्चित्तं कृत्वा त्रीनुपवासांस्त्रीन्प्राणायामान्घृतप्राशनं चाधिकं कृत्वा व्रतशेषं समापयेत् । अनापदि तु द्विगुणं प्रायश्चित्तं द्वादश प्राणायामाः पञ्चगव्यप्राशनं चेति । इति श्राद्धभोजनादौ प्रायश्चित्तम् ।

निमन्त्रितो विप्रो यदि प्रमादादन्यत्र भोक्तुं गच्छेत्तदा त्रिरात्रमुपवासं कुर्यात् । प्रमादाभावे तु प्राजापत्यम् । भोजनसमये शूद्रान्त्यजादिदर्शने भोजनोत्तरमाचमनपूर्वकं प्राणायामत्रयं कुर्यात् । इति ।

अथ श्राद्धकर्ता यदि श्राद्धदिने दन्तधावनं कुर्यात्तदा शतवारं गायत्र्याऽभिमन्त्रितं जलं पिबेत् । ऋतौ भार्यागमन उपवासः । अनृतौ

१ ग 'यस्वतीधे'। ३ क ग 'गुञ्जा'। ४ क ख 'द्दारध्या°'।

प्राजापत्यम् । वाग्लोपे विष्णुस्मरणम् । श्राद्धकर्तुः श्राद्धभोक्तुश्चोक्तनियमलोपे दोषतारतम्यात्प्रायश्चित्तं कल्पनीयम् । दोषतारतम्यं च निर्णयसिन्धुहेमाद्र्यादिग्रन्थेभ्योऽवगन्तव्यम् । विस्तरभयान्नेहोच्यते । उक्तप्रायश्चित्ताभावे सामान्यं प्रायश्चित्तमाचरणीयम् । तत्रानादेशे शतगायत्रीजप इति प्रायश्चित्तेन्दुशेखरे । अत्रापि दोषबाहुल्ये जपबाहुल्यम् । मिताक्षरायां तु लघुदोषे त्वनादिष्टे प्राजापत्यं समाचरेदिति चतुर्विंशतिमतम् । तत्रैवोशनसा चोक्तम्—

यत्रोक्तं यत्र वा नोक्तमिह पातकनाशकम् ।
प्राजापत्येन कृच्छ्रेण शुध्यते नात्र संशयः ॥ इति ।

प्रजापतिश्चाऽऽह—प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥
प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै ।
यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ॥ इति ।

अलमतिप्रसङ्गेन । श्राद्धाकरणे दोष उक्त आदित्यपुराणे—

न सन्ति पितरश्चेति कृत्वा मनसि यो नरः ।
श्राद्धं न कुरुते तत्र तस्य रक्तं पिबन्ति ते ॥ इति ।

सुमन्तुरपि—श्राद्धात्परतरं नान्यच्छ्रेयस्करमुदाहृतम् । इति ।

श्राद्धकर्तुः फलमुक्तं कूर्मपुराणे—

योऽनेन विधिना श्राद्धं कुर्याद्वै शान्तमानसः ।
व्यपेतकल्मषो नित्यं याति नाऽऽवर्तते पुनः ॥ इति ।

सर्वं शिवम् ।

इति श्रीमच्चित्तपावनकेळकरोपाभिधमहादेवात्मजबापूभट्टविरचितायां श्राद्धमञ्जर्यां प्रायश्चित्तप्रकरणम् ।

---

क्षेत्रे भार्गवनिर्मितेऽम्बुधितटे राजापुरप्रान्तके
वाटग्रामसमीपवर्तिफणशीसंज्ञो लघुग्रामकः ।
तत्स्थः केळकरोपनामकमहादेवात्मजः शाण्डिलो
बापूभट्ट इमं प्रयोगमकरोत्तेनाच्युतः प्रीयताम् ॥ १ ॥
प्रामूलं लिखितं किंचित्क्वचिद्व्यग्र पद्धतौ ।
धर्मशास्त्रनिबन्धादौ मूलवाक्यानि सन्ति च ॥ २ ॥
तानि दृष्ट्वा यथाज्ञानं निर्मिता श्राद्धमञ्जरी ।
कृपया शोधितव्येयं परोपकृतये बुधैः ॥ ३ ॥

विष्णोः प्रीतिकरा नित्यं तुलसीमञ्जरी यथा ।
सदाऽस्तु विदुषां प्रीत्यै तथेयं श्राद्धमञ्जरी ॥ ४ ॥
श्रीशालिवाहने शाके कराग्निमुनिभूमिते(१७३२) ।
प्रमोदवत्सरे मार्गे मञ्जरीयं समापिता ॥ ५ ॥
यन्नामोच्चारणान्न्यूनं कर्म संपूर्णतां व्रजेत् ।
तं नमामि महाविष्णुं शिवं च विमलेश्वरम् ॥ ६ ॥

इति श्रीमच्चित्तपावनकेळकरोपाभिधमहादेवात्मजबापूभट्टविरचिता
श्राद्धमञ्जरी समाप्ता ॥

---

| ग्रन्थनाम् । | मूल्यम् । रु० | आ० |
|---|---|---|
| ८५ ज्योतिर्निबन्धः—शूरमहाठश्रीशिवराजविरचितः । ... .... | ३ | १५ |
| ८६ विधानमाला—श्रीनृसिंहभट्टविरचिता । .... .... .... | ४ | ४ |
| ८७ अग्निहोत्रचन्द्रिका—किंजवडेकरोपाह्ववामनशास्त्रिभिः कृता । | २ | १४ |
| ८८ निरुक्तम्—दुर्गाचार्यकृतवृत्तिसमेतम् । भागद्वयात्मकम् । ... | ११ | ४ |
| ८९ काव्यप्रकाशः—संकेताख्यटीकासमेतः । ... .... .... | ३ | ४ |
| ९० शाङ्खायनारण्यकम्—ऋग्वेदान्तर्गतबाष्कलशाखीयम् । ... | ० | ९ |
| ९१ गौतमप्रणीतन्यायसूत्राणि—भाष्यवृत्तिभ्यां समेतानि । .... | ४ | ८ |
| ९२ श्रीमद्भगवद्गीता—सटीकरामानुजभाष्ययुता । ... .... | ७ | ८ |
| ९३ दर्शपूर्णमासप्रकाशः—किंजवडेकरोपाह्ववामनशास्त्रिकृतः । .... | ६ | १२ |
| ९४ संस्कारपद्धतिः—अभ्यंकरोपाह्वभास्करशास्त्रिविरचिता । .... | २ | ८ |
| ९५ काश्यपशिल्पम्—महेश्वरोपदिष्टम् । .... ... .... | ३ | १ |
| ९६ करणकौस्तुभः—कृष्णदैवज्ञविरचितः । ... .... .... | ० | ९ |
| ९७ मीमांसादर्शनम्—सतन्त्रवार्तिकशाबरभाष्योपेतं भागषट्कात्मकम् । | २१ | ९ |
| ९८ धर्मतत्त्वनिर्णयः—अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीतः । .... | ० | ९ |
| ९८ धर्मतत्त्वनिर्णयपरिशिष्टम् । " " .... | ० | १२ |
| ९९ भास्करीयबीजगणितम्—नवाङ्कुराटीकासहितम् । | ९ | ० |
| १०० प्रायश्चित्तेन्दुशेखरः—नागेशभट्टविरचितः । कुण्डार्कयुतः । | १ | १० |
| १०१ शांकरपादभूषणम्—पर्वतेत्युपाह्वरघुनाथशास्त्रिकृतं द्विभागम् । | ८ | ५ |
| १०२ ब्रह्मवैवर्तपुराणम्—भागद्वयात्मकम् । ... ... ... | ९ | ४ |
| श्रीमत्पद्मपुराणम्—महापुराणान्तर्गतं चतुर्भागात्मकम् । | २० | ० |
| सिद्धान्तदर्शनम्—महर्षिवेदव्यासप्रणीतं निरञ्जनभाष्ययुतम् । | १ | ४ |
| आधानपद्धतिः—किंजवडेकरोपाह्ववामनशास्त्रिभिः कृता । | १ | १४ |
| पश्वालम्भमीमांसा—किंजवडेकरोपाह्ववामनशास्त्रिविरचिता । | ० | १० |
| शिवभारतम्—कवीन्द्रपरमानन्दविरचितम् । ... .... | १ | ५ |